॥ अर्हम् ॥

श्रीविजयधर्मसूरिगुरुभ्यो नमः ।

# पर्युषणाऽष्टाह्निकव्याख्यानम् ।

स्मृत्वा पार्श्वसहस्रांशुं भव्यपंकजबोधकम् । पर्युषणाऽष्टाह्निकाया व्याख्यानं लिख्यते मया ॥ १ ॥

इह च यथा हतसकलकठिनकर्ममर्मणि इहाऽमुत्र विहितप्रभूतशर्मणि धृतलोकोत्तरनर्मणि श्रीपर्युषणापर्वणि समागते सकलसुरासुरेन्द्राः संभूय श्रीनन्दीश्वरनाम्नि सुषमधाम्नि अष्टमे द्वीपे धर्ममहिमानं कर्तुं गच्छन्ति । तथाहि—

पढमो जंबूदीवो धाइयसंडो य पुक्खरो तइयो । वारुणवरो चउत्थो खीरवरो पंचमो दीवो ॥ १ ॥
घयवरदीवो छट्ठो इक्खुवरो सत्तमो अ अट्ठमओ । नंदीसरो अ अरुणो नवमो इच्चाइ असंखिज्जा ॥ २ ॥

तत्र तावत् नन्दीश्वरद्वीपस्य मध्यभागे चतुर्दिक्षु चत्वारोऽञ्जनगिरयः पर्वताः सन्ति । तेषां प्रत्येकं चतुर्दिक्षु चत्वारो वाप्यः सन्ति ।

तस्यां वाप्यां मध्यभागे प्रत्येकं दधिमुखपर्वतोऽस्ति । पुनर्वाप्योरुभयपार्श्वयो रतिकरपर्वतो वर्त्तते । एवं प्रतिवाप्यां त्रयः पर्वताः सन्ति । एवं चतुर्दिशां मिलनाद् द्वादश । पुनरेकस्याऽञ्जनगिरेर्मेलनात् त्रयोदश । एवं चतुर्णामञ्जनगिरीणां सपरिकराणां मेलने चतुर्गुणिते द्विपंचाशत् । ते च पृथग्नामसंख्याः, येन चत्वारोऽञ्जनगिरयः ४ । षोडश दधिमुखाः १६ । द्वात्रिंशद् रतिकरपर्वताः ३२ । तेषामुपर्येकैकं जिनभवनमस्तीति द्वापञ्चाशत् जिनचैत्यानि सन्ति । पुनस्तेषु प्रासादेषु प्रत्येकं २ चतुर्विंशत्यधिकशतजिनबिम्बानि सन्ति । तेषां सर्वेषां प्रासादानां बिम्बान्यष्टचत्वारिंशदधिकचतुःषष्टिशतानि बिम्बानि भवन्ति । अंकतोऽपि ६४४८ । तानि कीदृशानि ?—शाश्वतानि, सदा शोभनानि, चतुर्द्वाराणि, वन्दनमालिकाकलितानि । तत्र देवेन्द्रा अधिकभावेन अष्टाह्निकमहोत्सवं कुर्वन्ति । जलचन्दनपुष्पादिभिरष्टद्रव्यैर्जिनबिम्बानि पूजयन्ति । जिनगुणान् स्तुवन्ति । गायन्ति । नाटकं विदधति । अष्टदिनावधिमहोत्सवं समाप्य पुनः स्वस्थानं गच्छन्ति । तथा श्रावकैरपि श्रीमति तीर्थंकरप्रकाशिते अस्मिन् महापर्वणि समागते धर्मकर्मणि यत्नो विधेयः । उक्तं च—

**पर्वाणि बहुशः सन्ति प्रोक्तानि श्रीजिनागमे । पर्युषणासमं नान्यत् कर्मणां मर्मभेदकृत् ॥ १ ॥**

तथा चास्मिन् पर्वणि श्रावकाणां कृत्यमाह—

**आश्रव-कषायरोधः कर्त्तव्यः श्रावकैः शुभाचारैः । सामायिकजिनपूजातपोविधानादिकृत्यपरैः ॥ १ ॥**

तत्र प्राणातिपातमृषावादाऽदत्तादानमैथुनपरिग्रहाख्याः पञ्च आश्रवाः । तत्त्यागो विधेयः । तत्र द्वीन्द्रियादयस्त्रसजीवाः, तेषां विराधना वर्ज्या श्रावकैः । तत्र सर्वदानेषु अभयदानमेव श्रेष्ठम् । उक्तं च सूत्रकृतांगे द्वितीयांगे—"दाणाण सिट्ठं अभयं पहाणं" इति ।

दीयते म्रियमाणस्य कोटिं जीवितमेव च । धनकोटिं न गृह्णीयात् सर्वो जीवितुमिच्छति ॥ १ ॥

अपिच—यो दद्यात् कांचनं मेरुं कृत्स्नां चापि वसुन्धराम् । एकस्य जीवितं दद्याद् न च तुल्यं युधिष्ठिर ! ॥ १ ॥

अथ च—पंथसमा नत्थि जरा दारिद्दसमो पराभवो नत्थि । मरणसमं नत्थि भयं खुहासमा वेयणा नत्थि ॥ १ ॥

इत्यतः सर्वदानानामभयदानं श्रेष्ठमिति । तथा—

जगनिस्सिएहिं भूएहिं तसनामेहिं थावरेहिं च नो । तेसिमारंभे दंडं मणसा वयसा कायसा चेव ॥ १ ॥
सव्वे वि दुक्खभीरू सव्वेवि सुहाहिलासिणो सत्ता । सव्वे वि जीवणरया सव्वे मरणाओ बीहंति ॥ २ ॥
वरमन्नभोगदाणं धणधन्नहिरण्णरज्जदाणं वा । न कुणइ तं मणहरिसं जायइ जं अभयदाणाओ ॥ ३ ॥

इति मत्त्वा कस्यापि जन्तोर्हिंसां न कुर्यादिति भावः । अभयदानोदाहरणं यथा—

द्रुमाभिधः क्षितीशोऽभूत् श्रीवसन्तपुरे पुरे । प्रियङ्करादिदयिताशतपञ्चकवल्लभः ॥ १ ॥
सलोप्त्रं तस्करं तत्राऽऽरक्षकैर्धृतमन्यदा । शूलायां दुःखमूलायां वध्यमादिष्टवान् नृपः ॥ २ ॥
तावत् प्रियङ्करा राज्ञी याचित्वैकाहमाप्य तम् । भूपाद् नीत्वा स्वकावासमभ्यङ्गोद्वर्त्तनादिकम् ॥ ३ ॥
स्नानं विलेपनं भुक्तिं सद्वासःपरिधापनम् । सर्वाभरणभूषां च भोगान् पञ्चाप्यचीकरत् ॥ ४ ॥ (युग्मम्)
तथैव स्पर्धयाऽन्याभिरपि भूपपुरंध्रिभिः । अरक्षि मारणात् सोऽह्नामेकोनशतपञ्चकम् ॥ ५ ॥

अथाऽन्याऽऽह प्रिया भूपं ममाप्येषोऽर्प्यतां प्रभो ! । पंक्तिं न वञ्चयन्त्येव सन्तो हि समताजुषः ॥ ६ ॥
नित्यशोऽभयदानेन देहि मेऽमुं प्रसीद माम् । नान्यत् किमपि मे दत्तमेतावन्तमनेहसम् ॥ ७ ॥
तत्कारुण्याद् नृपस्तुष्टः पुष्टो दिष्ट्येदमूचिवान् । दत्तो मया त्वयं तुभ्यं यावज्जीवं हि जीवताम् ॥ ८ ॥
ततः सा हृष्टहृदया समासात् स्नानभोजनम् । दत्त्वा चाल्पानि वासांसि प्रददौ सर्वतोऽभयम् ॥ ९ ॥
सोऽपि प्राप्याऽभयं राज्याद् अधिकं बुबुधे मुदा । सत्यं हि जीवितव्यार्थी मुञ्चेदैश्वर्यमप्यहो ! ॥ १० ॥
अथ राजाऽऽह का जातिः को देशः काऽभिधा तव । भद्राऽऽकारतया ह्येतद् विरुद्धं चौर्यकर्म्म ते ॥ ११ ॥
चौरः प्रोचे शृणु स्वामिन् ! अहं विन्ध्यपुरेशितुः । विन्ध्यधात्रीधवस्याऽतिप्रीतस्य श्रेष्ठिनः सुतः ॥ १२ ॥
वसुदत्ताभिधेयस्य वसन्ताख्योऽस्मि लालितः । पालितः पाठितोऽत्यर्थं वणिकन्यां विवाहितः ॥ १३ ॥
दुष्कर्मवशतः सोऽहं द्यूताऽसक्तोऽभवं पुनः । नामुञ्चं व्यसनं चैतत् पित्राद्यैः शिक्षितोऽप्यलम् ॥ १४ ॥
ततो विज्ञप्य भूपालं पित्रा निःसारितो गृहात् । ग्रामंग्रामं भ्रुवां भिक्षावृत्त्या जीवामि कष्टतः ॥ १५ ॥
द्यूतेन रममाणोऽहं तच द्रव्यं विना नहि । अनन्योपायकश्चौर्यप्रवृत्तस्त्वन्नरैर्धृतः ॥ १६ ॥
शूलारोपे समादिष्टे कम्पमानो भयादहम् । नव-ग्रहाऽ-ब्धिसंख्याभिस्त्वत्पत्नीमिश्र-साञ्जसम् ॥ १७ ॥
स्वगेहे भोज्यमानोऽपि सुस्निग्धाऽऽहारभोजनम् । प्रकाममुपभुञ्जानः शब्दादिविषयानपि ॥ १८ ॥

न तथा तुष्टिमापेदे शून्यचित्त इवाऽभवम् । वृकदृष्टमृग इव प्रातः स्वीयां मृतिं स्मरन् ॥ १९ ॥ ( त्रिभिर्विशेषकम् )
ततोऽन्त्यत्वत्प्रियाशीलमतीसद्मनि किञ्चन । भुक्तमात्रोऽप्यहं तुष्टो यावज्जीवाभयार्पणात् ॥ २० ॥
प्रसन्नेन नृपेणाथ शीलमत्याः प्रमोदतः । पट्टराज्ञीपदं दत्तमभयं हीप्सितप्रदम् ॥ २१ ॥
सा च शीलमती शुद्धधर्मकर्मसु कर्मठा । जीवरक्षाप्रभावेन जज्ञे सुगतिभागिनी ॥ २२ ॥
एतद्राज्ञीधर्मपुत्रो वसन्तो भूपसम्मतः । श्राद्धधर्मं गुरोः पार्श्वे लात्वा स्वःसुखभागभूत् ॥ २३ ॥
इत्थं चाभयदानस्य श्रुत्वा फलमनुत्तरम् । भवन्तोऽप्यत्र भो भव्याः! सादरा भवताऽद्भुते ॥ २४ ॥

इति अभयदाने शीलमतीराज्ञीकथा प्रथमा ।

अथ शिवशासने श्रीमहाभारते प्रथमपादे शान्तिपर्वणि उक्तम्, तद्यथा, युधिष्ठिरः पृच्छति, कृष्णः कथयति—

कथमुत्पद्यते धर्मः कथं धर्मो विवर्धते । कथं च स्थाप्यते धर्मः कथं धर्मो विनश्यति ॥ १ ॥
सत्येनोत्पद्यते धर्मो दया-दानेन वर्धते । क्षमया स्थाप्यते धर्मः क्रोधलोभाद् विनश्यति ॥ २ ॥
अहिंसा सत्यमस्तेयं त्यागो मैथुनवर्जनम् । पञ्चस्वेतेषु धर्मेषु सर्वे धर्माः प्रतिष्ठिताः ॥ ३ ॥
सर्वे वेदा न तत् कुर्युः सर्वे यज्ञाश्च भारत ! । सर्वे तीर्थाभिषेकाश्च यत् कुर्यात् प्राणिनां दया ॥ ४ ॥
अहिंसालक्षणो धर्मः, अधर्मः प्राणिनां वधः । तस्माद् धर्मार्थिभिर्लोकैः कर्त्तव्या प्राणिनां दया ॥ ५ ॥

अथ मार्कण्डपुराणेऽप्युक्तम्—

जीवानां रक्षणं श्रेष्ठं जीवा जीवितकांक्षिणः । तस्मात् समस्तदानेभ्योऽभयदानं प्रशस्यते ॥ ६ ॥
यो ददाति सहस्राणि गवामश्वशतानि च । अभयं सर्वसत्त्वेभ्यस्तद्दानमतिरिच्यते ॥ ७ ॥
कपिलानां सहस्राणि यो द्विजेभ्यः प्रयच्छति । एकस्य जीवितं दद्याद् नैव तुल्यं युधिष्ठिर ! ॥ ८ ॥
दत्तमिष्टं तपस्तप्तं तीर्थसेवा तथा श्रुतम् । सर्वेऽप्यभयदानस्य कलां नार्हन्ति षोडशीम् ॥ ९ ॥
नातो भूप ! तपोधर्मः कश्चिदन्योऽस्ति भूतले । प्राणिनां भयभीतानामभयं यत् प्रदीयते ॥ १० ॥
वरमेकस्य सत्त्वस्य दत्ता ह्यभयदक्षिणा । न तु विप्रसहस्रेभ्यो गोसहस्रमलङ्कृतम् ॥ ११ ॥
अभयं सर्वसत्त्वेभ्यो यो ददाति दयापरः । तस्य देहाद् विमुक्तस्य भयं नास्ति कुतश्चन ॥ १२ ॥
हेमधेनुधरादीनां दातारः सुलभा भुवि । दुर्लभः पुरुषो लोके यः प्राणिष्वभयप्रदः ॥ १३ ॥
महतामपि दानानां कालेन क्षीयते फलम् । भीताभयप्रदानस्य क्षय एव न विद्यते ॥ १४ ॥

इति शान्तिपर्वण्युक्तम् ।

सर्वजीवदयार्थं तु ये न हिंसन्ति प्राणिनः । निश्चितं धर्मसंयुक्तास्ते नराः स्वर्गगामिनः ॥ १ ॥
सप्तद्वीपं सरत्नं च दद्यात् मेरुं सुकाञ्चनम् । यस्य जीवदया नास्ति सर्वमेतद् निरर्थकम् ॥ २ ॥

यो दद्यात् काञ्चनं मेरुं कृत्स्नां चैव वसुन्धराम् । एकस्य जीवितं दद्याद् नैव तुल्यं युधिष्ठिर ! ॥ ३ ॥

इति भारतोक्तम् ।

आदेयः सुभगः सौम्यस्त्यागी भोगी यशोनिधिः । भवत्यभयदानेन चिरञ्जीवी निरामयः ॥ १ ॥
अहिंसा परमो धर्मस्तथाऽहिंसा परं तपः । अहिंसा परमं ज्ञानमहिंसा परमं पदम् ॥ २ ॥
अहिंसा परमं दानमहिंसा परमो दमः । अहिंसा परमो यज्ञस्तथाऽहिंसा परं पदम् ॥ ३ ॥

इति इतिहासपुराणेऽप्युक्तम् ।

अथाऽभयदानार्थे रात्रिभोजनवर्जनाधिकारो मार्कण्डपुराणोक्तः—

नोदकमपि पातव्यं रात्रावत्र युधिष्ठिर ! । तपस्विनां विशेषेण गृहिणां च विवेकिनाम् ॥ १ ॥
अस्तंगते दिवानाथ आपो रुधिरमुच्यते । अन्नं मांससमं प्रोक्तं मार्कण्डेन महर्षिणा ॥ २ ॥
मृते स्वजनमात्रेऽपि सूतकं जायते किल । अस्तंगते दिवानाथे भोजनं क्रियते कथम् ? ॥ ३ ॥
रक्तीभवन्ति तोयानि अन्नानि पिशितानि च । रात्रौ भोजनसक्तस्य ग्रासे तन्मांसभक्षणम् ॥ ४ ॥
मेधां पिपीलिका हन्ति यूका कुर्याज्जलोदरम् । कुरुते मक्षिका वान्तिं कुष्ठरोगं च कोलिकः ॥ ५ ॥

ये रात्रौ सर्वदाऽऽहारं वर्जयन्ति सुमेधसः । तेषां पक्षोपवासस्य फलं मासेन जायते ॥ ६ ॥

इति रात्रिभोजनाधिकारः ।

ततः श्रावकेण अत्र पर्वणि खण्डनपेषणवस्त्रक्षालनाद्यारम्भो विवर्जनीयः । तैलिकलोहकारभ्राष्ट्रकर्मकारकादिषु वाचा धनव्ययेन चारम्भो निवारणीयः । स्वशक्त्या वन्दिमोक्षश्च कार्यः । ग्रामनगरमध्येऽमारिघोषणा कारयितव्या । जीवरक्षा येन केनापि प्रकारेण कार्या । द्वितीयाऽऽश्रवपरित्यागे मृषावचनमत्र पर्वणि न वक्तव्यम् । गालीप्रदानादिकठिनवाणी न वक्तव्या । वाक्शुद्धिः कर्तव्या । तृतीयाऽऽश्रवपरित्यागे परधनग्रहणं विवर्जनीयम् । चतुर्थाऽऽश्रवपरित्यागेऽत्र पर्वणि ब्रह्मचर्यं पालनीयम् । स्त्रीसेवनपरित्यागो विधेयः । परस्त्रीसेवनं तु लोकद्वयविरुद्धत्वात् श्रावकेण अवश्यमेव वर्ज्यम् । पञ्चमाश्रवपरित्यागे धनधान्यादिनवविधपरिग्रहेषु विरतिः कार्या । पुनरत्र पर्युषणापर्वणि कषायपरित्यागो विधेयः । तत्र कषायाश्चत्वारः क्रोधमानमायालोभाख्याः । केनचित् साकं झकटदिनें विधेया । पूर्वकृतक्रोधस्यापि मिथ्यादुष्कृतं दातव्यम् । क्रोधस्य दुष्टत्वमुक्तं श्रीसोमप्रभाचार्यैः—

यो मित्रं मधुनो विकारकरणे सन्त्राससम्पादने सर्पस्य प्रतिबिम्बमङ्गदहने सप्तार्चिषः सोदरः ।
चैतन्यस्य निषूदने विषतरोः सब्रह्मचारिश्चिरं स क्रोधः कुशलाभिलापकुशलैर्निर्मूलमुन्मूल्यताम् ॥ १ ॥

द्वितीयकषायपरित्यागे मानो विवर्जनीयः । मानाविर्भावे सद्ध्यानवतामपि मुनीनां केवलाऽवाप्तौ अन्तरायो भवति । राजर्षिबाहुबलिवत् । मानापगुणाविर्भावे उक्तं श्रीसोमप्रभाचार्यैः—

यस्मादाविर्भवति विततिर्दुस्तरापन्नदीनां यस्मिन् शिष्टाभिरुचितगुणग्रामनामापि नास्ति ।
यश्च व्याप्तं वहति वधधीधूम्यया क्रोधदावं तं मानाद्रिं परिहर दुरारोहमौचित्यवृत्तेः ॥ १ ॥

इत्याद्यपगुणकारी मानोऽस्मिन् पर्वणि विवर्जनीयः । तृतीयकषायत्यागे माया परित्यजनीया । मायादूषणमुक्तं श्रीसोमप्रभाचार्यैः—

कुशलजननवन्ध्यां सत्यसूर्यास्तसन्ध्यां कुगतियुवतिमालां मोहमातङ्गशालाम् ।
शमकमलहिमानीं दुर्यशोराजधानीं व्यसनशतसहायां दूरतो मुञ्च मायाम् ॥ १ ॥

चतुर्थकषायत्यागे लोभो वर्ज्यः । धर्मकर्मणि धनव्ययः कर्तव्यः । लोभेन दुर्व्यापारादि कर्म न विधेयम् । लोभस्याऽप्रशस्तत्वमुक्तं श्रीसोमप्रभाचार्यैः—

ये दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते ।
सेवन्ते कृपणं पतिं गजघटासङ्घट्टदुःसञ्चरं सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ १ ॥

अतः कषायास्त्याज्याः । पुनरप्युक्तम्—

कोहो पीइं विणासेइ माणो विणयनासणो । माया मित्ताणि नासेइ लोहो सव्वविणासणो ॥ १ ॥

तस्मादत्र पर्वणि आश्रवकषाययोस्त्यागः श्रावकैर्विधेयः । पुनरत्र पर्वणि यत् कर्तव्यम् , तदेवाऽऽह—सामायिकजिनपूजा, इति । पुनः पर्युषणापर्वणि सुश्रावकैः सामायिकं कार्यम् । सामायिकस्वरूपमाह—

समता सर्वभूतेषु संयमः शुभभावना । आर्त्तरौद्रपरित्यागस्तद्धि सामायिकं व्रतम् ॥ १ ॥

गाथा अपि—जो समो सव्वभूएसु तसेसु थावरेसु अ । तस्स सामाइयं होइ इमं केवलिभासियं ॥ १ ॥

दिवसे दिवसे लक्खं देई सुवण्णस्स खंडिआ एगो । एगो पुण सामाइअं करेइ न पहुप्पए तस्स ॥ १ ॥

आदिपदात् पोषधः कार्यः । पोषधफलमिदम्—

पोसेइ सुहे भावे असुहाइं खवेइ नत्थि संदेहो । छिंदइ नरयतिरियगइ पोसहविहि अप्पमत्तेणं ॥ १ ॥

पुष्णाति धर्ममिति पोषधम् । तदत्र पर्वणि विधेयम् । तत्प्रमादे किं कर्तव्यम्, तदाह जिनपूजा, इति । पर्युषणापर्वणि समागते सुश्रावकैर्यथाशक्ति द्रव्यपूजा कर्तव्या । देवार्चनफलमाह—

सयं पमज्जणे पुण्णं सहस्सं च विलेवणे । सयसाहस्सिया माला अणंतं गीयवाइए ॥ १ ॥

श्रीजिनदर्शनादेव बोधिबीजावाप्तिर्भवत्यार्द्रकुमारवत् । तथाहि—

नाम्नाऽस्ति मगधो देशः क्लेशलेशविवर्जितः । यत्र दुःखमित्राऽन्यायनामापि ज्ञायते नहि ॥ १ ॥
तत्र राजगृहं नाम पुरं सुरपुरोपमम् । यत्सौन्दर्यं वीक्ष्य लङ्का लज्जितेवाब्धिमाविशत् ॥ २ ॥
तृणीकृतद्विपच्छ्रेणिः श्रेणिकस्तत्र भूपतिः । तदङ्गजश्चतुर्बुद्धिबन्धुरोऽभयमन्त्र्यभूत् ॥ ३ ॥
इतश्चाऽम्भोधिमध्यस्थे देश आर्द्रकसंज्ञके । आर्द्रकाख्ये पुरे क्ष्मापो बभूवाऽऽर्द्रकनामतः ॥ ४ ॥

प्रियायामार्द्रकाख्यायां तस्याऽभूत् तनयो नयी । आख्ययाऽऽर्द्रकुमारः सोऽलंचक्रे यौवनावनिम् ॥ ५ ॥
तस्याऽर्द्रकमहीभर्त्तुः श्रेणिकेन सहाऽभवत् । पारम्पर्याऽऽगता प्रीतिस्तन्मानसनियन्त्रणम् ॥ ६ ॥
अन्येद्युः श्रेणिको भूपो दत्त्वा प्राभृतमद्भुतम् । उपाऽऽर्द्रकं मन्त्रिणं स्वं प्राहिणोत् प्रीतिहेतवे ॥ ७ ॥
मन्त्रिणाऽथोपनीतं तदादाय प्राभृतं नृपः । स्नेहेन श्रेणिकक्ष्मापं सदा हृष्टश्च तुष्टुवे ॥ ८ ॥
तत आर्द्रकुमारस्तमाख्यत् कः श्रेणिकः प्रभो ! । येनेदृशी तव प्रीतिः समभूदविनश्वरा ॥ ९ ॥
बभाषे भूपतिर्भूपः श्रेणिकोऽस्ति महाबलः । प्रीतिः परम्पराऽऽयाता तत्कुले मत्कुले तथा ॥ १० ॥
अथाऽऽर्द्रकुमारस्तं सस्नेहं साह मन्त्रिणम् । कोऽप्यन्यूनगुणः सूनुरस्ति ते स्वामिनो वद ? ॥ ११ ॥
उवाच सचिवः सूनुः पञ्चामात्यशताग्रणीः । मत्स्वामिनो धियां धाम नाम्नाऽभयकुमारकः ॥ १२ ॥
समं तेन मम प्रीतिरुचितेति विचिन्त्य सः । मन्त्रिणं साह मा यासीर्मामनापृच्छ्य धीसख ! ॥ १३ ॥
श्रोतव्यं च त्वया तत्र गच्छता वचनं शुचि । ममाऽभयं प्रति प्रीतिद्रुमबीजोपमं खलु ॥ १४ ॥
मन्त्र्यप्येवमिति प्रोच्य क्ष्मापदत्ताश्रयश्रितः । दिनानि कानिचित् तत्र स सुखेनाऽत्यवाहयत् ॥ १५ ॥
अन्यदाऽऽर्द्रकभूपालो दत्त्वा मुक्ताफलादिकम् । प्राभृतं भूरि स्वनरं व्यसृजत् सचिवं च तम् ॥ १६ ॥
अभयेन समं मैत्रीं चिकीर्षन्नार्द्रकासुतः । मुक्ताद्यदाद् अभयाय करे तस्यैव मन्त्रिणः ॥ १७ ॥

तन्नरो मन्त्रिणा साकं प्राप्य राजगृहं पुरम् । श्रेणिकायाऽभयायाऽपि ददौ तत् प्राभृतं क्रमात ॥ १८ ॥
जगौ सचिवराजोऽथ अभयस्येति वाचिकम् ॥ त्वयाऽऽर्द्रककुमारोऽसौ समं मैत्रीं चिकीर्षति ॥ १९ ॥
दध्यौ ततोऽभयो जैनधर्मज्ञः पूर्वजन्मनि । विराधितव्रतो जातोऽनार्यदेशेष्वसौ ध्रुवम् ॥ २० ॥
अथ केनाऽप्युपायेन कृत्वा तं परमार्हतम् । जवात् सफलयाम्येनं शुचिं सौहार्दपादपम् ॥ २१ ॥
नूनमासन्नभव्यस्य तस्याऽर्हद्बिम्बदर्शनात् । उत्पत्स्यते पूर्वजातिस्मृतिः सोऽन्तः प्रभोत्स्यते ॥ २२ ॥
इति ध्यात्वाऽऽदिदेवस्य प्रतिमां प्राभृतच्छलात् । अभयः प्राक्षिपत् पेटामध्ये रत्नमयीं वराम् ॥ २३ ॥
विसृष्टे श्रेणिकेशेन तस्मिन्नार्द्रकपूरुषे । तां पेटामभयो दत्त्वा तस्यैवेवं जगाद च ॥ २४ ॥
दत्त्वाऽऽर्द्रककुमारस्येमां पेटां प्राभृतैर्भृताम् । एतच्च वाचिकं वाच्यं मदीयं तत्पुरस्त्वया ॥ २५ ॥
भूत्वैकाकी रहस्येतां पेटामुद्घाटयेत् स्वयम् । तदन्तर्वस्तु पश्येच्च दर्शयेर्मा च कस्यचित् ॥ २६ ॥
ओमित्युक्त्वा पुमानेष गत्वा च स्वपुरे ददौ । स्वस्वामिस्वामिपुत्राभ्यां तत्तद्दत्तमुपायनम् ॥ २७ ॥
तदेवाऽऽर्द्रकुमाराय प्रोवाचाऽभयवाचिकम् । गत्वा रहसि तां पेटां ततः सोऽप्युदमुद्रयत् ॥ २८ ॥
तदन्तःस्थामपश्यच्च प्रतिमामादिमार्हतः । दध्यौ च किञ्चिदङ्गस्याऽऽभरणं किमिदं वरम् ? ॥ २९ ॥
दृष्टं पूर्वमिदं क्वापि मनसैष विचिन्तयन् । जातजातिस्मृतिः पूर्वभवमेवमबोधि सः ॥ ३० ॥

भवादस्मात् तृतीयेऽहं भवे कौटुम्बिकोऽभवम् । श्रीवसन्तपुरे सामायिको वन्धुमतीपतिः ॥ ३१ ॥
अन्येद्युः सुस्थिताचार्याद् धर्मं श्रुत्वा प्रियायुतः । आत्तव्रतः क्रमात् जातो गीतार्थो गुरुसन्निधौ ॥ ३२ ॥
रागवानेकदाऽभूवं पश्यन् बन्धुमतीं प्रियाम् । निजाभिप्रायमाख्यां च पुरस्तस्याः स्वयोपितः ॥ ३३ ॥
सा तु स्वशीलरक्षार्थं हित्वा प्राणान् निजान् क्षणात् । गृहीतानशना शुक्ललेश्यया देवतामगात् ॥ ३४ ॥
वीक्ष्येत्युत्पन्नवैराग्यरंगोऽनशनमाश्रयम् । समाधिना मृतिं प्राप्याऽभूवं च त्रिदशस्ततः ॥ ३५ ॥
च्युतस्ततोऽहमुत्पन्नोऽनार्ये भग्नव्रतोऽथ माम् । प्रतिबोधयिता यः स बान्धवः सद्गुरुश्च मे ॥ ३६ ॥
केनचिद् भाग्ययोगेनाऽभयामात्येन बोधितः । मन्दभाग्योऽहमद्यापि यत् तं द्रष्टुमनीशिता ॥ ३७ ॥
तदनुज्ञाप्य जनकमार्यदेशं व्रजाम्यहम् । इति ध्यात्वाऽर्द्रकासूनुः क्ष्मापमित्थं व्यजिज्ञपत् ॥ ३८ ॥
सहाऽभयकुमारेण तात ! वाञ्छामि दर्शनम् । सोऽप्यवादीत् मा स्म यासीर्वत्स ! त्वं तत्र सर्वथा ॥ ३९ ॥
बद्धः पित्राऽऽज्ञया सोऽथोत्कण्ठितोऽप्यभयं प्रति । शयने भोजने याने नापि प्राप रतिं क्वचित् ॥ ४० ॥
तत्रोड्डीय यियासुः स पार्श्वस्थानेवमब्रवीत् । कीदृग् राजगृहं द्रङ्गं कस्कोऽध्वा तत्र गच्छताम् ? ॥ ४१ ॥
विज्ञायाऽऽर्द्रकराजोऽपि पुत्रभावमथादिशत् । रक्षार्थं पञ्च सामन्तशतान्यस्य सुतस्य च ॥ ४२ ॥
स वाहवाहनव्याजात् पुर्या निर्याय चागमत् । पूर्वसङ्केतितं पोतं समारुह्याऽऽर्यनीवृति ॥ ४३ ॥

प्रेष्य नित्यं पूज्यमानां प्रतिमामभयाय ताम् । प्रव्रज्यामाददानः सोऽथैवं देवतयोदितः ॥ ४४ ॥
अद्यापि ते भोग्यफलमस्ति कर्म प्रतीक्ष्य तत् । भुक्त्वा च समये दीक्षोररीकार्या महाशय ! ॥ ४५ ॥
सुरीगिरमनादृत्य चोरीकृत्य स्वपौरुषम् । आर्द्रकिः सोऽथ वैराग्यात् प्रव्रज्यां स्वयमग्रहीत् ॥ ४६ ॥
तीव्रं व्रतं स प्रत्येकबुद्धः शुद्धं समाचरन् । श्रीवसन्तपुरं प्राप विहरंश्चान्यदा सुधीः ॥ ४७ ॥
धर्मध्यानपरस्तत्र बाह्यदेवकुले क्वचित् । कायोत्सर्गं विधायाथ तस्थिवान् स यथासुखम् ॥ ४८ ॥
इतश्च नगरे तत्र देवदत्तस्य गेहिनः । च्युत्वा बन्धुमतीजीवस्तनया श्रीमतीत्यभूत् ॥ ४९ ॥
समं मनोरथैः पित्रोर्वर्धमाना दिने दिने । सा श्रीमती क्रमात् प्राप पांशुक्रीडोचितं वयः ॥ ५० ॥
तदा देवकुले तस्मिन् पौरबालालिभिः समम् । क्रीडितुं पतिवरणक्रीडया श्रीमती गता ॥ ५१ ॥
तत्रोचुर्वृणुत वरमिति बाला मिथोऽथ ताः । काचित् कश्चिदिति स्वैरमखिला वव्रिरे वरान् ॥ ५२ ॥
जगाद श्रीमती वव्रे सख्य एष मया मुनिः । चारुव्रतं चारुव्रतमित्याख्यद् देवताऽम्बरे ॥ ५३ ॥
रत्नानि देवताऽवर्षत् तन्वती स्तनितं घनम् । तद्गर्जितभयाद् लग्ना श्रीमती तन्मुनेः पदे ॥ ५४ ॥
अनुकूलोपसर्गोऽयमिति विज्ञाय चार्द्रकिः । व्यहार्षीदन्यतः क्वापि स्थितिर्नैकत्र यद् मुनेः ॥ ५५ ॥
निषिद्धस्तां रत्नवृष्टिं देव्या गृह्णन् नृपस्तया । जल्पन्त्याऽस्यै वरणके वित्तं दत्तं मयेत्यदः ॥ ५६ ॥

जग्राह द्रविणं सर्वं श्रीमतीजनकोऽथ तत् । श्रीमतीवरणायाऽऽगुस्ततोऽन्ये बहवो वराः ॥ ५७ ॥
वरं वृण्विति सा पित्रा भाषिता श्रीमती जगौ । वरो वव्रे मया साधुर्यः प्रमाणं स एव मे ॥ ५८ ॥
तद् दत्तं गृह्णता ताताऽनुज्ञातं हि त्वयाऽप्यदः । तस्मै दत्त्वा किमन्यस्मै दत्से नेदं श्रुतं हि किम् ? ॥ ५९ ॥
सकृद् जल्पन्ति राजानः सकृद् जल्पन्ति पण्डिताः । सकृत् कन्याः प्रदीयन्ते त्रीण्येतानि सकृत् सकृत् ॥ ६० ॥
भ्राम्यन् स भृङ्गवत् ज्ञेयो वत्से ! कथमितस्ततः । श्रेष्ठिनेत्युदिता श्रीमत्यूचेऽतिचतुरं वचः ॥ ६१ ॥
तदा गर्जिभयाद् लग्ना तदंघ्रौ लक्ष्म सुन्दरम् । अद्राक्षं तात ! तेनैवोपलक्षयेऽधुनापि तम् ॥ ६२ ॥
श्रेष्ठ्याख्यत् पत्तने यत्र समागच्छन्ति साधवः । भिक्षां त्वं ददती तेभ्यो मुनिं तं प्रविलोकय ॥ ६३ ॥
मुनिभ्यो ददती दानं द्वादशाब्देषु साऽऽर्द्रकम् । दृष्ट्वोपलक्ष्य चावादीत् मुदिता श्रीमतीदृशम् ॥ ६४ ॥
तदा वृतो मया नाथ ! त्वं त्यक्त्वा मां गतो बलात् । उपलब्धोऽधुना पुण्यैर्यास्यसि क्व प्रभो ! वद ॥ ६५ ॥
दिव्यां वाचं स्मरन् सोऽथ भूभृदाद्युपरोधतः । पर्यणैपीदिमां भावि नान्यथा येन जायते ॥ ६६ ॥
तस्य स्वैरं चिरं भोगान् भुञ्जानस्य तया समम् । गार्हस्थ्यचिह्नवद् जज्ञे सूनुर्वृद्धिमियाय च ॥ ६७ ॥
उवाचाऽऽर्द्रकुमारोऽथ सहायोऽयमतः परम् । भविता ते सुतोऽहं तु प्रव्रजामि शुभे ! वद ॥ ६८ ॥
सुतं ज्ञापयितुं तर्कुं प्रारेभे तर्कुकर्म सा । तत्पृष्टया तयाऽभाणि तस्य दीक्षामनोरथः ॥ ६९ ॥

बालकोऽपि जगौ मातरधृतिं मा कृथा वृथा। तातं बद्ध्वा धारयिष्ये वाक्यैर्लल्लाक्षरैरहम् ॥ ७० ॥
इत्यादाय तर्कुसूत्रमावेष्ट्य च पितुः क्रमौ। जगौ बालोऽम्ब! मा भैषीरयं बद्धः क यास्यति ? ॥ ७१ ॥
सोऽपि दध्याववहो! स्नेहानुबन्धः कोऽयमस्य तत् ?। तावत् वर्षाण्यहं स्थाता यावत् तत्तन्तुवेष्टकाः ॥ ७२ ॥
गणिता द्वादशाऽभूवन् सूत्रबन्धास्ततः स्थितः। द्वादशाब्दान् स सम्पूर्णसन्धश्चैवमचिन्तयत् ॥ ७३ ॥
संसारसागरे मज्जन् व्रतमाश्रित्य पोतवत्। अत्याक्षं तद् जडः कोऽन्यो मत्तोऽभाग्यशिरोमणेः ॥ ७४ ॥
प्राच्ये भवे व्रतं भग्नं मनसैव तथाऽप्यहम्। बभूवाऽनार्यताभाजी भवित्री मेऽथ का गतिः ? ॥ ७५ ॥
अद्यापि व्रतमादायाऽऽत्मानं तीव्रतपोऽग्निना। शोधयामीत्यनुज्ञाप्य श्रीमतीं सोऽग्रहीद् व्रतम् ॥ ७६ ॥
गृहाद् निर्गत्य सोऽपश्यद् व्रजन् राजगृहे पुरे। स्तेयवृत्तिपरामात्माऽमात्यपञ्चशतीं च ताम् ॥ ७७ ॥
उपलक्ष्य वन्दितश्च तैर्मुनिः स जगाद तान्। युष्माभिराहता कैषा जीविका पापकारणम् ? ॥ ७८ ॥
ते जगुर्वञ्चयित्वा भोः! यदा त्वं नाथ! निर्गतः। तदादि त्वां मार्गयन्तो जीवामः स्तेयवृत्तितः ॥ ७९ ॥
भद्राः! हहा! किमाचीर्णं लोकद्वयविनाशकम् ?। अथापि गृह्यतां दीक्षा भवद्वयहितावहा ॥ ८० ॥
प्रबुद्धांस्तांश्च प्रव्राज्य श्रीआर्द्रकिमहामुनिः। श्रीवीरं वन्दितुं यातो गोशालोऽभिमुखोऽजनि ॥ ८१ ॥
उवाच स तपोमूलं कष्टं सर्वं मुधैव ते। हेतुर्नियतिरेवाऽत्र शुभाशुभफलस्य यत् ॥ ८२ ॥

सर्वत्र मन्यते हेतुर्नियतिर्यदि भोस्त्वया । वृथा क्रियाः प्रसज्यन्ते तत्तेऽपीप्सितसिद्धये ॥ ८३ ॥
तथा नियतिवादिन् ! त्वं किं स्थानस्थो न तिष्ठसि ? । भोजनाद्यर्थसम्पत्तौ किं वा प्रयतसे शठ ! ॥ ८४ ॥
किंच पौरुषमप्यूरीकार्यं नियतिवद् यतः । विशिष्यतेऽर्थनिष्पत्तौ पौरुषं नियतेरपि ॥ ८५ ॥
वृश्चिकाद् वृश्चिकोत्पत्तिर्गोमयादपि सम्भवेत् । बलिष्ठा नियतिर्येन पौरुषं नियतेरपि ॥ ८६ ॥
इत्थं गोशालकं साधुः स चकार निरुत्तरम् । स्तुतश्च तत्र मिलितैः खेचराद्यैर्गुरुस्वरम् ॥ ८७ ॥
अथाऽऽर्द्रकिमुनिर्हस्तितापसाऽऽश्रममागमत् । तापसास्तत्र हत्वेभं मांसमश्नन्ति नित्यशः ॥ ८८ ॥
प्राहुश्च बहुभिर्धान्यैर्मत्स्याद्यैर्वा हतैश्च किम् ? । वरमेको हतो हस्ती कालोऽस्येति यतो बहुः ॥ ८९ ॥
ततो धर्ममयैर्वाक्यैस्तानज्ञान् प्रतिबोध्य सः । प्रव्राज्य च प्रतस्थेऽग्रे वन्दितुं चरमं जिनम् ॥ ९० ॥
तदाऽभयान्वितोऽभ्यागात् श्रेणिको वन्दनाय तम् । तद्गुणान् वर्णयन्नूचेऽभयस्तेन महात्मना ॥ ९१ ॥
विनापि कारणं मेऽभूदुपकारी त्वमेव भोः ! । यत् त्वया धर्मबन्धो ! सा प्रेषिता प्रतिमाऽऽर्हती ॥ ९२ ॥
अहं जातिस्मरीभूयाऽभवं तां वीक्ष्य चाऽऽर्हतः । अर्हद्धर्मप्रदानाद् मे किं किं दत्तं नहि त्वया ? ॥ ९३ ॥
ततः प्रमुदिताः सर्वे श्रेणिकेशाऽभयादयः । तं मुनिं प्रीतचित्ताः स्वं वन्दित्वा ययुरालयम् ॥ ९४ ॥
ततो राजगृहे गत्वा नत्वा चान्तिमतीर्थपम् । क्रमात् समाधिना मृत्वा स प्रापच्छाश्वतीं श्रियं ॥ ९५ ॥

एवं विचार्य चतुराः ! प्रवराऽऽर्यदेशाऽऽयत्तां समस्तगुणसम्पदमत्र लोके ।
प्राक्पुण्यसञ्चयवशाद् अधिगम्य चार्य-क्षेत्रं पवित्रयत मानवजन्म सौवम् ॥ ९६ ॥

इति श्रीआर्द्रकुमारकथा द्वितीया सम्पूर्णा कर्पूरप्रकरटीकातो ज्ञेया ।

अथ अन्यमतीनामपि जिनदर्शनतो जैनधर्मप्राप्तिमाह—

विज्ञाय धन्या जिनधर्ममर्म रज्यन्ति शय्यम्भववद् न जाड्ये ।
पीला सिताभावितधेनुदुग्धं को वाऽऽम्लतक्राऽर्कपयांसि पश्येत् ? ॥ १ ॥

कथा चेयम्—

पुरे राजगृहे जज्ञे भट्टः शय्यम्भवाभिधः । धर्मार्थी यजते यज्ञान् मिथ्यात्वज्ञानदूषितः ॥ १ ॥
इतश्च प्रभवस्वामी मुनिं निजपदोचितम् । स्वगच्छेऽवीक्षमाणोऽथ श्रुतदृष्टिं बहिर्ददौ ॥ २ ॥
ज्ञात्वा शय्यम्भवं सौवपदयोग्यं गुरुस्ततः । यज्ञे साधुद्वयं दक्षं प्रैषीत् तद्बोधहेतवे ॥ ३ ॥
अहो ! कष्टमहो ! कष्टं तत्त्वं विज्ञायते नहि । तं तत्र गत्वा चेत्युक्त्वा पश्चाद् वलितमंहसा ॥ ४ ॥
सोऽस्ति तत्त्वं किमप्यन्यदिति चेतसि चिन्तयन् । न मृषा वादिनो जैनाश्चेत्यपृच्छद् निजं गुरुम् ॥ ५ ॥
किं तत्त्वमिति सोऽप्याख्यत् तत्त्वं यज्ञक्रिया ननु ? । मिथ्या तद्वचनं जानन् क्रुद्धः शय्यम्भवो गुरौ ॥ ६ ॥

ततः कृपाणमाकृष्य गुरुं शय्यम्भवोऽभ्यधात् । वद तत्त्वं न चेद् छेत्स्ये शिरोऽहमसिनाऽमुना ॥ ७ ॥
तत्त्वं वाच्यं शिरश्छेदे इति भीतश्च तद्गुरुः । श्रीशान्तिप्रतिमां यज्ञस्तम्भाधःस्थापितां ददौ ॥ ८ ॥
तया शय्यम्भवो बुद्धो मिथ्यात्वं च क्रमागतम् । हित्वा प्रव्रज्य चाध्यैष्ट द्वादशाङ्गीं क्रमेण सः ॥ ९ ॥
स्थापितः सोऽथ चाऽऽत्मीये पट्टे प्रभवसूरिभिः । श्रीमान् शय्यम्भवः सूरिर्विजहार धरातले ॥ १० ॥
इतश्च प्रव्रजन् पत्नीमन्तर्वत्नीं जहौ स याम् । तया मनक इत्याख्यः सुषुवे सत्तमः सुतः ॥ ११ ॥
सोऽथाष्टवार्षिकः क्रीडन् सवयोभिः स्तनन्धयैः । अपितृक इति प्रोचे तर्जकैर्नर्मकर्मणि ॥ १२ ॥
इति ह्रीणेन तेनाथ माताऽपृच्छ्युपरोधतः । सातिदुःखभराक्रान्ताऽप्यवदद् गद्गदस्वरम् ॥ १३ ॥
यजमानो निजं यज्ञं वत्स! त्वज्जनको वशी । एत्य श्वेताम्बराभ्यां स किञ्चिदुक्त्वा च धूर्त्तितः ॥ १४ ॥
सोऽथ मां गुर्विणीं त्यक्त्वा गत्वा च गुरुसन्निधौ । प्रव्रज्यामाददे वत्स! मन्दभाग्या करोमि किम् ॥ १५ ॥
स त्वत्पिताऽधुना वत्स! जातः श्वेताम्बराग्रणीः । श्रूयते पाटलीपुत्रपत्तने मुनिसत्तमः ॥ १६ ॥
जननीं सोऽप्यनुज्ञाप्य जनकं द्रष्टुमुत्सुकः । आजगाम धियां धाम पाटलीपुत्रगोपुरे ॥ १७ ॥
सूरींस्तत्राऽऽगतानूचे क्वाऽस्ति शय्यम्भवो मुनिः ? । तेऽपि श्रुतोपयोगेन विजज्ञुस्तं निजाङ्गजम् ॥ १८ ॥
ततो वसतिमानीय स तैः प्रव्राजितस्तदा । तस्य षाण्मासिकं चायुरवशिष्टमबुध्यत ॥ १९ ॥

स तद्धितचिकीः सूरिर्द्वादशाङ्ग्याः समुद्धृतम् । दशवैकालिकं नाम कृत्वा शास्त्रमपाठयत् ॥ २० ॥
सोऽधीतशास्त्रः पूर्णायुर्मृत्वाऽभूद् भासुरः सुरः । चक्रुस्ते सूरयोऽप्यश्रुपातं निष्पातकं ततः ॥ २१ ॥
तांश्च तन्मुनयः प्रोचुर्यदि स्वामिन् ! भवादृशः । सम्मोहरक्षसा ग्रस्तास्तत् क्व स्थास्यति धीरता ? ॥ २२ ॥
सोऽप्याख्यदश्रुपातोऽयं मोहदुःखोद्भवो न मे । किन्तु विस्मयसम्पन्नः शीतलत्वाद् विभाव्यताम् ॥ २३ ॥
विस्मयोऽत्र मृतौ को व इत्युक्तस्तैर्गुरुर्जगौ । मत्सूनुनाऽमुनाऽसाध्यचिरात् स्वर्गः स विस्मयः ॥ २४ ॥
ते जगुश्चेत् स वः सूनुः किं नो न ज्ञापितः प्रभो ! । ते प्राहुर्ज्ञापिते तस्याऽऽत्मनः कार्यं न सिध्यति ॥ २५ ॥
ततः समाधिनाऽऽपाल्य व्रतं शय्यम्भवो भुवि । चिरं प्रबोध्य भव्यालिं मृत्वा प्रान्ते दिवं ययौ ॥ २६ ॥
एवं बुद्ध्वा बुधाः ! सम्यग् जिनधर्मं सुशर्मदम् । मा मिथ्यात्वे मतिं स्वीयां क्वचिद् मलिनयन्तु भोः ! ॥ २७ ॥

इति शय्यम्भवसूरिकथा कर्पूरप्रकरणे ।

भगवद्वाण्युपरि रौहिणेयचौरदृष्टान्तमाह—

द्वेषेऽपि बोधकवचःश्रवणं विधाय स्याद् रौहिणेय इव जन्तुरुदारलाभः ।
क्वाथोऽप्रियोऽपि सरुजां सुखदो रविर्वा सन्तापकोऽपि जगदङ्गभृतां हिताय ॥ १ ॥

भावार्थं तु दृष्टान्तेनाह—

पुरं राजगृहं नाम्ना श्रियां गृहमिवाद्भुतम् । वैभारगिरिरित्यस्ति तस्य सीम्नि गुरुर्गिरिः ॥ १ ॥

तत्कन्दरोदरस्थायी चौरो लोहखुराऽऽख्यया । चाण्डाल इव पापात्मा बभूव भुवि विश्रुतः ॥ २ ॥
पुरे राजगृहे नित्यं पौरोकसि निशि ध्रुवम् । पिशाच इव चक्रेऽसौ लब्ध्वा छलमुपद्रवम् ॥ ३ ॥
आददानस्ततो द्युम्नं कामयन् स्वपराङ्गनाः । निशान्तमिव कोशं वा स मेने स्वस्य तत् पुरम् ॥ ४ ॥
तस्याऽनुरूपो रूपेण तनुजोऽजनि तस्करः । रोहिण्यां नाम तत्पत्न्यां रौहिणेयोऽभिधानतः ॥ ५ ॥
तनयस्तेन तातेनाऽन्यदोक्तो मरणक्षणे । अवश्यं चेद् विधत्से त्वं वत्स! किञ्चिद् वदामि तत् ॥ ६ ॥
त्वदुक्तमखिलं तात! विधास्येऽहं तदादिश! । पित्राज्ञां खण्डयेत् कोऽज्ञस्ततः स मुदितोऽवदत् ॥ ७ ॥
देवैः समवसरणे विहिते यः स्थितोऽन्वहम् । धर्ममादिशति वीरो नाऽऽकर्ण्यं तद्वचस्त्वया ॥ ८ ॥
उपदिश्येति मृत्वाऽसौ जज्ञे दुर्गतिभाजनम् । रौहिणेयः पुनः स्तैन्यं पितेव व्यतनोत् पुरि ॥ ९ ॥
इतश्च विहरन् वीरो विभुर्ग्रामपुरादिषु । तत्राऽऽगत्य स्थितो व्याख्यासद्मनि त्रिदशैः कृते ॥ १० ॥
जिनो योजनगामिन्या धर्मं दिशति भाषया । रौहिणेयो व्रजन् राजगृहे तद्देशमासदत् ॥ ११ ॥
स दध्यावध्वनाऽनेन यदि याम्यधुना तदा । श्रुत्वा वीरवचोऽहं स्यात् पित्राज्ञाभङ्गपातकी ॥ १२ ॥
अन्यतोऽध्वा न चाऽस्तीति विमृश्य मनसि स्वयम् । कर्णौ पिधाय पाणिभ्यां गन्तुमारभते स्म सः ॥ १३ ॥
वेगेन गच्छतस्तस्यांऽह्रौ भग्नः कण्टको दृढम् । तं पादादप्यनुद्धृत्य गन्तुं दस्युः शशाक न ॥ १४ ॥

नान्यः कश्चिदुपायोऽस्तीत्यपास्य श्रवणात् करम् । उद्धरन् कण्टकं वीरविभोरित्यश्रृणोद् वचः ॥ १५ ॥
अनिमेषदृशोऽम्लानमाल्या भूमितलास्पृशः । मनःकार्यकृतोऽखेदमलिनास्त्रिदशा इति ॥ १६ ॥
बहुश्रुतं मयैतद्धिग् इत्याकृष्याऽऽशु कण्टकम् । तथैवाऽपासरत् कर्णौ कराभ्यां स पिधाय च ॥ १७ ॥
नगरे तेन चौरेण मुष्यमाणे सदाऽन्यदा । श्रेष्ठिभिः श्रेणिको भूपः समुपेत्येत्यभाणि च ॥ १८ ॥
त्वयीशे सत्यपि श्रीर्नः स्वामिन् ! निःस्वामिनामिव । पश्यतामपि गृह्येत दायादैरिव दस्युभिः ॥ १९ ॥
क्षितीशस्तेन वाक्येन लोकानामतिपीडितः । आकार्य रक्षकानाख्यत् क्रोधेनाऽऽरुणितेक्षणः ॥ २० ॥
दायादीभूय वा चौरीभूयेदं लुप्यते पुरम् । भवद्भिरेव भोः! येन दस्युभ्यो ! दीयते नहि ॥ २१ ॥
तेऽथोचन् रौहिणेयाख्यो दस्युर्मुष्णाति कश्चन । एतान् नागरिकान्नैष धर्तुं दृष्टोऽपि पार्यते ॥ २२ ॥
प्लवङ्गवत् स उत्प्लुत्य गेहाद् गेहं भ्रमन्नथ । वप्रमुल्लंघ्य गच्छंश्च मार्गे न क्वापि वीक्ष्यते ॥ २३ ॥
अतो धर्तुं च तं नाथ ! तस्करं शक्नुमो नहि । एतदारक्षकत्वं त्वं गृहाण धरणीश ! तत् ॥ २४ ॥
उदश्चितैकभ्रूसंज्ञेरितो भूविभुनाऽभयः । तांश्च प्रोचे चमूं स्वीयां सज्जयन्तु पुराद् बहिः ॥ २५ ॥
प्रविशन् निःसरन् वाऽसौ ग्राह्योऽत्रायोपलक्ष्य सः । ऊरीकृत्य तमादेशं निर्गता दण्डपाशिकाः ॥ २६ ॥
चमूं ते मन्त्रिणाऽऽदिष्टा गुप्ता बहिरसज्जयन् । पुरीं रुद्धामजानन् स सशङ्कं प्राविशद् निशि ॥ २७ ॥

ज्ञात्वाऽऽकारादिभिश्चौर इत्यसौ सैनिकैर्धृतः । बद्ध्वा च रौहिणेयाख्यो नृपतेरर्पितस्ततः ॥ २८ ॥
भूपोऽभयमुवाचाऽस्य निग्रहः कः स चावदत् । अलोप्त्रस्याऽस्य बद्धस्य निग्रहो नोचितः प्रभो ! ॥ २९ ॥
अथाऽप्राक्षीद् नृपः स्तेनं कः कुत्रत्यः किमाह्वयः ? । त्वं कीदृग्जीविकः कस्माद् इहाऽऽयातो निरूपय ॥ ३० ॥
प्रत्यूचे सोऽपि भूपालं दुर्गचण्डः कुटुम्बिकः । शालग्रामे कार्यवशाद् इहाऽऽयातोऽस्मि भूपते ! ॥ ३१ ॥
उत्सूरे प्रविशन्नत्र रुद्धोऽमीभिरतत्त्ववित् । बद्ध्वाऽऽनीतश्च तद् नाथ ! यथार्थं त्वं विचारय ॥ ३२ ॥
अथ प्रक्षिप्य तं गुप्तौ ग्रामे तत्र नृपो नरम् । किञ्चित् तस्य प्रवृत्त्यादि ज्ञातुं प्रेषयति स्म सः ॥ ३३ ॥
संकेतं ग्राहितोऽस्त्येष ग्रामस्तेन पुरापि सः । दीर्घदर्शी भवेत् कोऽपि चौरोऽप्यतिविशालधीः ॥ ३४ ॥
भूभृत्पुंसा तत्स्वरूपं पृष्टो ग्रामोऽभ्यधादिदम् । दुर्गचण्डोऽत्र वास्तव्यः क्वापि ग्रामे गतोऽस्ति सः ॥ ३५ ॥
इत्थं नृपनरेणोक्तोऽथाऽभयोऽचिन्तयद् नु किम् ? । अनेनाऽऽसूत्रितं छद्म दुर्लक्ष्यं सुधियामपि ॥ ३६ ॥
सद्लक्षणमथाऽमात्यः स प्रासादमसज्जयत् । विमानमिव लेखानां रत्नराजिविराजितम् ॥ ३७ ॥
गन्धर्वोल्लासितोल्लासिगीतसंगीतकोल्बणम् । अप्सरोभिरिव स्त्रीभिः सुरूपाभिरलङ्कृतम् ॥ ३९ ॥
भित्तिभागसमालम्बिलम्बमाल्यालिभूषितम् । स्वर्गखण्डमिवाऽऽयातं साक्षात् कौतुकतः क्षितौ ॥३९॥ (त्रिभिर्विशेषकम् )
ततोऽभयः सुरापानोन्मत्तं चौरं विधाप्य तम् । परिधाप्य दिव्यवस्त्रैः सुशय्यायामशाययत् ॥ ४० ॥

सुरायां परिणीतायां ददर्शोत्थित एव सः । दिव्यलक्ष्मीं चमत्कारकरीं निर्हेतुकां ततः ॥ ४१ ॥
पुंस्त्रीभिरभयादेशवर्तिनीभिर्व्यतन्यत । रुचिरं जय नन्दाऽऽदिवचनं श्रुतिशर्मदम् ॥ ४२ ॥
त्वं विमानेऽधुना नाकी संजातोऽत्र महर्द्धिकः । त्वं नाथोऽसि वयं विश्वेऽप्येते ते किङ्कराः सदा ॥ ४३ ॥
सुरो भवामि हाऽहं किमिति दध्यौ स यावता । तावतैकोऽवदद् देवः पूर्वं सुकृतदुष्कृते ॥ ४४ ॥
निजे निवेदयाऽस्माकं पश्चाद् नाट्यविधिं यथा । दिव्यां त्वां दर्शयामस्त्वमपि भोगांश्च भुङ्क्ष्व भोः ! ॥ ४५ ॥ (युग्मम्)
कथं निश्चेयमेतत्तु ध्यायता तेन तत् स्मृतम् । श्रीवीरवचनं कण्टकोद्धारसमये श्रुतम् ॥ ४६ ॥
यद्यर्हतः श्रुतं देवस्वरूपं संवदिष्यति । यथार्थं कथयिष्यामि मिथ्या दास्येऽन्यथोत्तरम् ॥ ४७ ॥
ईदृग्बुद्ध्या ददर्शाऽऽसावेतान् पृथ्वीतलस्पृशः । सनिमेषान् ततो म्लानमाल्यान् स्वेदाविलाङ्गकान् ॥ ४८ ॥
ज्ञात्वा तच्छद्म सोऽवोचद् रौहिणेय इमानिति । दानं दत्तं जिनार्चा च कृता सेवा च सद्गुरोः ॥ ४९ ॥
चैत्यानि कारितान्युच्चैर्धर्मोऽयं प्राग्भवे कृतः । यत्प्रभावाद् मया प्राप्तं विमानमिदमीदृशम् ॥ ५० ॥
एवं वदन् स तैरूचे किञ्चित् पापमथो वद । स प्राह साधुसम्पर्काद् मयाऽकृत्यं कृतं नहि ॥ ५१ ॥
पुनः प्रोचे स तैः स्तैन्यं त्वया किञ्चित् कृतं क्वचित् । तद् वदैकस्वभावेन जन्म याति न कस्यचित् ॥ ५२ ॥
साक्षेपमाख्यदेष स्यात् कः स्तैन्यात् स्वर्गभाग् जड ! । शिलामारुह्य कोऽपारपारावारं तरत्यहो ! ? ॥ ५३ ॥

ततो गत्वाऽखिलं तैस्तद् राज्ञे मन्त्र्यभयाय च । निवेदितेऽभयोऽमात्यो महीपमिदमभ्यधात् ॥ ५४ ॥
स्वामिन्नीदृगुपायैर्यो ज्ञातुं दस्युर्न शक्यते । स दस्युरपि मोक्तव्यो नोचितं नीतिलङ्घनम् ॥ ५५ ॥
इति मन्त्रिगिरा राज्ञा रौहिणेयोऽपि तस्करः । मुक्तो न कपटाटोपपटुभिः के हि वञ्चिताः ? ॥ ५६ ॥
रौहिणेयस्ततो दध्यौ धिगाज्ञां जनकस्य मे । सार्ववाक्यसुधास्वादाद् वञ्चितोऽहं यया चिरात् ! ॥ ५७ ॥
नाऽभविष्यद् जिनाधीशगीर्मयाऽऽकर्णिता यदि । यमोपान्तं तदाऽयास्यं विविधैर्वधबन्धनैः ॥ ५८ ॥
अनिच्छताऽपि यत् तीर्थनाथवाक्यं मया श्रुतम् । तज्जीविताय मे जातं पीयूषमिव रोगिणः ॥ ५९ ॥
प्राणत्राणाय यस्योपदेशलेशोऽपि मेऽभवत् । तस्य सर्वोपदेशः किं कर्त्ता संसेवितो ननु ? ॥ ६० ॥
इति ध्यायन्नसौ गत्वा श्रीमद्वीरजिनान्तिके । प्रभुं प्रणम्य विज्ञप्तिं रौहिणेयोऽतनोदिमाम् ॥ ६१ ॥
तीर्थनाथ ! तमःस्तोमव्याप्तनेत्राञ्जनं तव । गीः प्रकाशयते वर्त्म सावित्रीव विभावसोः ॥ ६२ ॥
अनाप्तो मत्पिता चाप्तमानीयत्कालमीश ! माम् । वियोज्य वाक्सुधास्वादात् तव, चौर्ये त्वयोजयत् ॥ ६३ ॥
यत् तदा त्वद्वचोऽश्रौषमनीच्छुरपि तीर्थप ! । तेन मन्त्राक्षरेणैव त्रातोऽहं भूपसर्पतः ॥ ६४ ॥
त्वयाऽहं मृतिवक्त्रस्थो यथा रक्षक ! रक्षितः । तथाऽधुनाऽपि मां रक्ष भवाम्भोनिधिभीतितः ॥ ६५ ॥
अर्हन् तत्कृपया सिद्धिसौधप्राप्तिविधायिनीम् । विदधे साधुसद्धर्मदेशनां मधुराक्षराम् ॥ ६६ ॥

प्रबुद्धो रौहिणेयोऽथ नत्वाऽवक् तीर्थपं विभो ! । दीक्षाऽऽदानाय मेऽद्याऽभूद् दृढ एव मनोरथः ॥ ६७ ॥
परं किञ्चिद् मेऽस्ति वाच्यं समं च श्रेणिकेशिना । प्रभुं प्रोच्येति तं भूपमुपेत्याऽसौ जगावदः ॥ ६८ ॥
रौहिणेयः स एवाऽहं भवन्नगरमोषकः । वीरवाक्याद् मया बुद्धिरभयस्याऽपि लङ्घिता ॥ ६९ ॥
बुद्धोऽथाहं व्रतार्थ्यस्मि तत् प्रेषय निजं नरम् । दर्शयामि यथा सर्वं तत् तद् लोप्त्रं क्षितीश्वर ! ॥ ७० ॥
ततश्च भूभृदादेशादभयः पौरलोकयुक् । रौहिणेयालये गत्वा लोकं लोप्त्रं समार्पयत् ॥ ७१ ॥
परार्थचौर्याकार्यत्वं प्रबोध्य स्वकुटुम्बकम् । दीक्षाऽऽदानाय श्रीवीरान्तिकेऽगाद् रौहिणेयकः ॥ ७२ ॥
स्वकुटुम्बयुतो भूपकृतनिष्क्रमणोत्सवः । स प्रव्रज्य तपस्तेपे तीव्रकर्मक्षयोद्यतः ॥ ७३ ॥
प्रान्ते सल्लेखनां कृत्वा विहितानशनः सुधीः । विपद्य रौहिणेयर्षिर्बभूव त्रिदशोत्तमः ॥ ७४ ॥

एवं जिनेन्द्रवचनामृतपानतो यत् सोऽनन्तमृत्युमजयद् मुनिरौहिणेयः ।
अन्येऽपि तद्वदिह सार्ववचोऽमृतेन पीतेन भव्यनिवहा अजरामराः स्युः ॥ ७५ ॥

इति रौहिणेयकथा श्रीकर्पूरप्रकरणग्रन्थाद् ज्ञेया ।

पुनरत्र पर्वणि यत् कर्त्तव्यं तदाह—तपोविधानादि । यथाशक्ति तपसि यत्नो विधेयः । चतुर्थषष्ठाष्टमादि तपः कार्यम् । तत्र यदि कश्चित् स्नेहवशात् तन्निषेधं करोति, तथापि तल्लोपबुद्धिर्न धार्या । श्रीभरतपुत्रसूर्ययशोनृपवत् । तत्कथा चेयम्—

अयोध्यायामभूत् स्वामी श्रीमत्सूर्ययशा नृपः । स त्रिखण्डमहीभर्त्ता षट्खण्डाधिपनन्दनः ॥ १ ॥
अखण्डशासनो दुष्टान् खण्डयामास नीतिवित् ॥ चन्द्रोज्ज्वलेन यशसा व्यधात् कुवलयोदयम् ॥ २ ॥
यथा द्वयो रवीन्द्वोश्च प्रतापो-व्योम्नि दीप्यते । एकस्यैव तथा सूर्ययशसो जगतीतले ॥ ३ ॥
बभार मुकुटं शक्रेणोपढौकितमीशितुः । राज्यस्य समये सूर्ययशास्तद्द्विगुणोदयः ॥ ४ ॥
किरीटस्य च माहात्म्यात् तस्याऽदित्ययशा नृपः । स्वामिवत् सुरसेव्योभूत् सदैव जितशात्रवः ॥ ५ ॥
यत्प्रतापोऽरिसौधेषु तद्यशोवारि शोषयन् । ज्वलन् विशेषतश्चित्रं तृणोच्छेदमसूत्रयत् ॥ ६ ॥
राधावेधपणप्राप्ता विद्याभृत्कनकाङ्गजा । सर्वरामाशिरोरत्नं जयश्रीः सत्प्रियाऽजनि ॥ ७ ॥
द्वात्रिंशति सहस्राणि विद्याभृद्भूपजान्यपि । आसन् स्वस्य कलत्राणि पवित्राणि पराण्यथ ॥ ८ ॥
चतुष्पर्व्यां विशेषेण सोऽष्टमीं च चतुर्दशीम् । प्रत्याख्यानपौषधादितपसाऽऽराधयत्यलम् ॥ ९ ॥
जीवितादरवत् पर्वादरश्चेतसि वल्लभः । चिन्त्यते तेन पर्वेदं जीवितादपि रक्ष्यते ॥ १० ॥
बालाबलाखगारण्यप्राणिनोऽपीह तद्दिने । नियमाद् नान्नमश्नन्ति श्रुत्वाऽर्हद्धर्ममुत्तमम् ॥ ११ ॥
अथैकदा सुनासीरः सुधर्मामास्थितः सभाम् । दृष्ट्वा तन्निश्चयं ज्ञानाद् चमत्कृतिमनाटयत् ॥ १२ ॥
अथोर्वशी विश्ववशीकरणौषधमादिमम् । सहसा तच्छिरःकम्पं वीक्ष्य प्रोवाच वासवम् ॥ १३ ॥

स्वामिन् ! कविर्न काव्यानि वक्ति युक्तितयाऽधुना । हृद्यानि न च पद्यानि गुरुर्गृह्णाति साम्प्रतम् ॥ १४ ॥
रम्भाऽऽरम्भरतोक्तानि नृत्यानि न च नृत्यति । परेऽपि हूहूहाहाऽऽद्या गीतबन्धपरा नहि ॥ १५ ॥
अन्यद् हर्षोपकर्षस्य सदक्षं नाधुना क्वचित् । तत् किं निमित्तमीशेनाऽधुनि मीतेन मस्तकम् ? ॥ १६ ॥
ततः प्रोवाच देवेशस्तत्सत्त्वं हृदि चिन्तयन् । शृणूर्वशि ! ज्ञानचक्षुरधुना मेऽस्ति यद् भुवि ॥ १७ ॥
नाभेयस्वामिनः पौत्रः पुत्रो भरतचक्रिणः । पात्ययोध्यां सूर्ययशाः सात्त्विकानां शिरोमणिः ॥ १८ ॥
स चाऽष्टमीचतुर्दश्योः पर्वणोस्तपसोः क्वचित् । चाल्यते निश्चयाद् नैव कृतयत्नैः सुरैरपि ॥ १९ ॥
पूर्वकाष्ठामतिक्रम्य भानुश्चेदभ्युदेत्यहो ! । मेरुर्वा कम्पते वातैर्मर्यादां वाऽम्बुधिस्त्यजेत् ॥ २० ॥
सुरद्रुर्वाऽवकेशी स्यात् तथाप्येतं स्वनिश्चयम् । अपि कण्ठगतैः प्राणैर्जिनाज्ञावद् न मुञ्चति ॥ २१ ॥ (युग्मम्)
उर्वशी सा तथा श्रुत्वा स्मृत्वा मनसि किञ्चन । प्रत्युत्तरं विभोर्दातुमसहायेत्यचिन्तयत् ॥ २२ ॥
अहो ! प्रभुत्वं किमपि न श्लाघ्यं विबुधाधिपः । अज्ञवद् वक्ति युक्तिज्ञो मनुष्येऽपि सुनिश्चयम् ॥ २३ ॥
यः सप्तधातुसम्पन्नशरीरोऽप्यन्नजीवकः । सोऽपि देवैरचाल्यो यद् श्रद्दधाति हि कोऽपि तत् ? ॥ २४ ॥
मद्देयरसपूरेण दूरे रेणुकणा इव । केषां विवेकप्रमुखा शाम्यन्ति न गुणा अहो ! ॥ २५ ॥
वचो राभसिकं भर्तुर्विधाय वितथं हि तम् । भ्रंशयिष्ये व्रताच्छैलाद् गण्डशैलमिवाऽऽपगा ॥ २६ ॥

इति प्रतिज्ञामामन्त्र्य रम्भया सहितोर्वशी । दधती पाणिना वीणां स्वर्गाद् भुवमवातरत् ॥ २७ ॥
अयोध्यानिकटोद्याने चैत्ये श्रीप्रथमप्रभोः । मोहकृद् रूपमाधाय प्रबन्धात्तु जगाय सा ॥ २८ ॥
शाखिशाखासमासीनाः पक्षिणोऽपि क्षणं तदा । नात्मानं विविदुर्नादमूर्च्छनास्वतिमूर्च्छिताः ॥ २९ ॥
गोधाऽहिनकुलप्रख्यास्त्यक्त्वा त्यक्त्वा निजाश्रयान् । आलेख्यलिखिता यद्वत् तस्थुर्निश्चलवृत्तयः ॥ ३० ॥
अर्धचर्वितसस्यास्या निःस्पन्दनयना मृगाः । घटिता इव पाषाणैस्तस्थुस्तद्गानमोहिताः ॥ ३१ ॥
इतश्च श्रीसूर्ययशा वाहकेलिरसात् पथि । व्यावर्त्तितस्तदाऽश्रौषीत् तयोर्गीतरवान् यदा ॥ ३२ ॥
वाजिनो वाजविमुखा गजाः सज्जा गतौ नहि । न पत्तयः पदमपि यानेऽभूवन्नलं तदा ॥ ३३ ॥
इत्थं बलं स्वकर्त्तव्येऽप्यबलं वीक्ष्य पार्थिवः । जगाद सादरं श्रीमान् सचिवं शुद्धभारतीम् ॥ ३४ ॥
अहो! मोहरसाम्भोधिवेलयेव निवारिताः । नाशकंश्चलितुं ह्येते सैनिका इव पक्षिणः ॥ ३५ ॥
चालाबलाबिलावासाः पक्षिणो मृगवारणाः । मुह्यन्त्यमी नादरसैः शाखिनोऽपि सुनिश्चलाः ॥ ३६ ॥
नादेनापि न मुह्यन्ति येऽनन्तसुखहेतुना । किं तेषामुपमीयन्ते पशवो नादवेदिनः ॥ ३७ ॥
नादोऽनन्तसुखाधारो नादो दुःखौघघातकः । नादो यस्य समीपस्थः स शुचिर्विश्वपूजितः ॥ ३८ ॥
प्राणानपि पणीकृत्य नादं गृह्णाति यो मृगः । सुधाकलाकरेणापि सोऽङ्के स्वस्य निवेशितः ॥ ३९ ॥

नादेन देवास्तुष्यन्ति नादाद् धर्मः प्रजायते । नादाद् महीपतेरर्थो नादाद् नार्योऽपि वश्यगाः ॥ ४० ॥
नादोऽयमेव ह्यानन्त्यं गमितो गुरुयोगतः । परमानन्दसौख्यानि प्रयच्छत्यपि हेलया ॥ ४१ ॥
तद् नमस्कुर्महे चैत्ये श्रीयुगादिजिनेश्वरम् । तत्र गेयरवाऽऽदानमपि लप्स्यामहे वयम् ॥ ४२ ॥
इत्थमामन्त्र्य भूपालः सचिवैः सैनिकैः समम् । जगाम जिनचैत्यान्तरन्तस्तद्गानमोहितः ॥ ४३ ॥
तावत् स्फुरद्दीप्रकान्तिनादपीयूपनिम्नगे । पश्यति स महीभर्त्ता वीणापाणी कुमारिके ॥ ४४ ॥
कामभार्ये इवालोक्य ते नृपः स्नेहचक्षुषा । विद्धः कामाशुगैश्चित्ते चिन्तयामासिवानिति ॥ ४५ ॥
किमेतयोः कण्ठकुण्डात् सुधानादः प्रवर्त्तते ? । किं वा नादामृतैरेते निर्मिते विश्वकर्मणा ? ॥ ४६ ॥
रूपं निरुपमं गानं संदानममृतस्य च । एतयोः कस्य पुण्यस्य भोगाय भविता ननु ? ॥ ४७ ॥
इत्यालोच्य महीपालस्तयोश्चक्षुः क्षिपन् बहु । ननाम कामदान् पादान् श्रीयुगादिजिनेशितुः ॥ ४८ ॥
प्रत्यावृत्तः सूर्ययशा निपण्णोऽथ बलानके । सचिवाय समादिक्षत् तयोर्ज्ञातुं कुलादिकम् ॥ ४९ ॥
सचिवोऽपि नृपादेशाद् उपसृत्य तयोः पुरः । सुधामधुरया वाचा सम्भाष्येत्थमथाऽऽलपत् ॥ ५० ॥
के युवां त्रिषु लोकेषु कः पतिर्युवयोर्ननु ? । किमर्थमागतिरिह ? वदतां सकलं स्त्रियौ ! ॥ ५१ ॥
एका तयोरथोवाच निशम्य सचिवाद् वचः । आवां विद्याधरपतेर्मणिचूडस्य नन्दने ॥ ५२ ॥

आवास्यात् कलयाऽस्माकं कलया सादरं मनः । नित्यं क्रीडाऽपि वीणासु रेरमीति च पुस्तकैः ॥ ५३ ॥
स्पर्धया यौवनोद्भेदमनयाऽऽप्यावयोः पितुः । कस्य देये इमे कन्ये इति चिन्ताऽप्यवर्धत ॥ ५४ ॥
न सदृक्षं पतिं त्वावां लभमाने जगत्यपि । न्यावर्त्तयाव: पितरं तच्चिन्तासागरादथ ॥ ५५ ॥
स्थाने स्थानेऽर्हच्चैत्यानां नमस्याभिर्निजं जनुः । सफलं कुर्वहे मन्त्रिन्! क पुनर्मानुजो भवः ? ॥ ५६ ॥
अयोध्येयं तीर्थभूता जिनपादपवित्रिता । अतोऽत्र भारते चैत्ये नमावो जिनमादिमम् ॥ ५७ ॥
तयोरेवं निगदन्त्योर्मन्त्री वाचमुपाददे । समं श्रीसूर्ययशसा युवयोः संगमो वरः ॥ ५८ ॥
असौ तु पौत्रो वृषभस्वामिनो भरताङ्गजः । कलाकलापकलितः सौम्यः सद्गुणवान् बली ॥ ५९ ॥
तद् ध्रुवं वृषभस्वामी युवयोस्तुष्ट एव हि । सहसा यत् सूर्ययशा वरः प्राप्तश्चिरादपि ॥ ६० ॥
यथा चन्द्रमसा भातः कौमुदीक्षणदे मुदे । युवां श्रीसूर्ययशसा तथा भातं सदृक्षतः ॥ ६१ ॥
इत्यालापिनि मन्त्रीशे ते तं जगदतुः स्त्रियौ । स्वाधीनं हि पतिं मुक्त्वा परं नैवाऽऽश्रयावहे ॥ ६२ ॥
त्वद्वाचमन्यथाकुर्वन् निषेध्यो हि नृपो मया । इत्यवोचदिलानाथानुमतं सचिवस्ततः ॥ ६३ ॥
तदैव श्रीयुगादीशसमक्षं समजायत । तेषां पाणिग्रहोत्साहः सर्वदृक्प्रीतिबन्धनम् ॥ ६४ ॥
तयोः प्रीतिरसाकृष्टः पार्थिवः स्पष्टचेष्टितः । संसारसारं विमृशन् मृगाक्षीं मन्मथं रतिम् ॥ ६५ ॥

धर्मार्थबाधया कामं सेवमानो नृपोऽधिकम् । पुमर्थरथमेकेन चक्रेणाऽचालयद् बलात् ॥ ६६ ॥
अन्यदा क्षणदाऽऽरम्भे सन्ध्याभ्यामिव वासरः । पत्नीभ्यां श्रीसूर्ययशा वृतो वातायनं ययौ ॥ ६७ ॥
भोः! लोका अष्टमीपर्व भावि श्वः सादरास्ततः । पटहोद्घोषणामित्यश्रौष्टां ते कपटस्त्रियौ ॥ ६८ ॥
विज्ञायाऽवसरं रम्भा भम्भावादनकारणम् । अजानतीव नृपतिमपृच्छदिति सादरा ॥ ६९ ॥
जगौ नृपतिरप्येवं शृणु रम्भे! महाव्रतम् । चतुर्दश्यष्टमीपर्व तातेनोक्तं समस्ति नः ॥ ७० ॥
अष्टाह्निकाद्वयं पर्व चातुर्मासीत्रयं तथा । वार्षिकं पर्युषणाख्यं वर्षपापं व्यपोहति ॥ ७१ ॥
ज्ञानं हि प्रथमं रत्नं रत्नत्रयपुरस्सरम् । तस्याऽऽराधनमेणाक्षि! पञ्चम्या दिवसे भवेत् ॥ ७२ ॥
पर्वाण्यमूनि सत्पुण्यकारणानि जिनाज्ञया । महाप्रभाववैचित्र्यपवित्राणि शुभानने! ॥ ७३ ॥
सर्वदा विहितं पुण्यं स्वर्गसिद्धिसुखप्रदम् । सत्यं स्याद् अष्टमीपर्वखण्डना यदि नो भवेत् ॥ ७४ ॥
शुभाशुभानि कर्माणि जीवः संचिनुते प्रिये! । चतुष्पर्व्यां घोनरकहेतून्यध्यवसायतः ॥ ७५ ॥
तस्मादस्यां परित्यज्य भवभूरुहबीजवत् । गृहव्यापारमखिलं शुभं कर्म विधीयते ॥ ७६ ॥
चतुष्पर्व्यां न च स्नानं न स्त्रीसेवा कलिर्न च । न द्यूतपरहास्यादि न मात्सर्यं न च क्रुधः ॥ ७७ ॥
कषायसङ्गो न मनाग् ममता न प्रियेष्वपि । यथारुचि न च क्रीडा प्रमादाद्यं न किञ्चन ॥ ७८ ॥

विधेयं धर्मरुचिना पुंसा यत्नपरेण च । भाव्यं शुभध्यानवता परमेष्ठिस्मृतीरिणा ॥ ७९ ॥ (त्रिभिर्विशेषकम्)
सामायिकं पोषधं च षष्ठाष्टममुखं तपः । कृत्वा जनो जिनस्यार्चां चास्यां नियमवान् भवेत् ॥ ८० ॥
गुरुपादसमीपस्थः परमेष्ठिस्तुतिं स्मरन् । जनोऽर्जयति पुण्यानि क्षिप्त्वा कर्माष्टकिल्बिषम् ॥ ८१ ॥
त्रयोदश्यां च सप्तम्यां लोकबोधाय भामिनि ! । अयं हि पटहोद्घोषो मदादेशात् प्रजायते ॥ ८२ ॥
चतुर्दश्यष्टमीपर्व त्रैलोक्ये देवि ! दुर्लभम् । करोति यो जनो भक्त्या स याति परमं पदम् ॥ ८३ ॥
श्रुत्वोर्वशी नृपेणोक्तं तन्निश्चयचमत्कृता । जगाद मायावचनप्रपञ्चचतुरा गिरम् ॥ ८४ ॥
कथं नाथ ! मनुष्यत्वं रूपं राज्यमखण्डितम् । त्वया विडम्ब्यते सर्वं तपःक्लेशादिभिश्चिरम् ! ॥ ८५ ॥
यथेच्छं भुङ्क्ष्व सौख्यानि क पुनर्मानवो भवः । क राज्यं क च सद्भोगः पश्चात्तापोऽस्तु मेति ते ॥ ८६ ॥
तन्निशम्य नृपस्तस्यास्तप्तत्रपुनिभं वचः । अन्तर्दाहैकपिशुनां पुनर्गिरमुपाददे ॥ ८७ ॥
रे ! रेऽधमे ! धर्मनिन्दामलिने तव गीरियम् । विद्याधरकुलाचारोचिता न हि मनागपि ॥ ८८ ॥
धिक् ते वैदग्ध्यमखिलं धिग् धिग् रूपं कुलं वयः । न येन जिनपूजादितपस्वीकृतिरस्ति ते ॥ ८९ ॥
मानुष्यं रूपमारोग्यं राज्यं च तपसाऽऽप्यते । आराधयेद् न तत् को हि कृतज्ञकुलमण्डनः ॥ ९० ॥
धर्माराधनतो न स्याद् देहस्य हि विडम्बनम् । विना धर्मं तु विषयैः केवलं सुविडम्बनम् ॥ ९१ ॥

यथेच्छं क्रियते धर्मः क पुनर्मानवो भवः । क राज्यं क च सद्भोगः पश्चात्तापोऽस्तु मेति मे ॥ ९२ ॥
अष्टम्यां पाक्षिके पक्षिमृगसिंहाहिशावकाः । अप्याहारं न गृह्णन्ति कथं गृह्णाम्यहं प्रिये ! ॥ ९३ ॥
धिगस्तु तेषां ज्ञातृत्वं मनुष्यत्वं च तद् वृथा । न पर्वाराधनं यत्र सर्वधर्मनिबन्धनम् ॥ ९४ ॥
श्रीयुगादिजिनाधीशादिष्टं पर्वेदमुत्तमम् । विना तपो वृथा कुर्वे नापि कण्ठगतासुभिः ॥ ९५ ॥
वरं प्रयातु मे राज्यं वरं प्राणक्षयोऽस्तु मे । न पुनः पर्वतपसो भ्रष्टो बाले ! भवाम्यहम् ॥ ९६ ॥
इति क्रोधाकुलं भूपवचः श्रुत्वोर्वशी ततः । मोहमायां प्रकुर्वन्ती पुनर्वाचमुपाददे ॥ ९७ ॥
स्वामिन् ! मया प्रेमरसोन्निद्रयेदं वचो जगे । मा भूद् वपुःक्लेश इति तत् क्रोधावसरोऽत्र न ॥ ९८ ॥
आवाभ्यां तु पितुर्वाक्यविमुखीभ्यां पुरेत्यपि । स्वच्छन्दचारी न पतिर्वृतो भवविडम्बनात् ॥ ९९ ॥
पूर्वकर्मपरीपाकाद् अधुना त्वं वरो वृतः । संसारसौख्यं शीलं च सर्वमेकपदे गतम् ॥ १०० ॥
स्वाधीनः पुंस्त्रियोर्योगो यदि तद् मान्मथं सुखम् । अन्यथा रजनीवस्त्रयोगवच्च विडम्बनम् ॥ १०१ ॥
स्वामिन् ! त्वया तु नाभेयजिननाथपुरः पुरा । मद्वाक्यकरणं सम्यग् उररीकृतमेव हि ॥ १०२ ॥
एकदा त्वत्परीक्षार्थमहमेतदयाचिषम् । स्वामी स्वल्पेन कार्येण गतः क्रोधवशं हहा ! ॥ १०३ ॥
भ्रष्टाऽहमुभयाद् नाथ ! शीलादपि सुखादपि । तन्मेऽस्तु मरणं श्रेयश्चितापावकसेवनात् ॥ १०४ ॥

इति तद्वाक्यमाकर्ण्य नृपस्तन्मग्नमानसः । स्मरन् स्वकीयवाक्यस्य जगाद विशदं वचः ॥ १०५ ॥
यदुक्तं ताततातेन तातेन विहितं च यत् । तस्य पुत्रोऽप्यहं कुर्वे कथं तत्पर्वनाशनम् ॥ १०६ ॥
हरिणाक्षि ! हिरण्यानि महीं मानिनि ! चाखिलाम् । मत्तेभगामिनि ! गजान् वाजिनो वा वरानने ! ॥ १०७ ॥
कृशाङ्गि ! कोशमखिलं गृहाण गृहिणि ! स्वयम् । न सौख्यं येन नो धर्मस्तद् मां कारय मा प्रिये ! ॥१०८॥ (युग्मम्)
ईषत् स्मित्वा ततः साऽपि जगौ कोमलया गिरा । भवादृशां भूमिनाथ ! सत्योक्तिः खलु सद्व्रतम् ॥ १०९ ॥
स्वाङ्गीकारविघातो हि विहितो येन पाप्मना । सोऽशुचिर्वसुधा तस्य भारादतिविषीदति ॥ ११० ॥
नाथ ! त्वयेदमपि नो सिध्यतीति यदा तदा । कथं राज्यादिदातृत्वं सेत्स्यति क्षितिमण्डन ! ॥ १११ ॥
पितुर्विद्याधरैश्वर्यं त्वत्कृते न बहूकृतम् । राज्यादिनाऽद्य किं कुर्वे येन मे न मनस्विता ॥ ११२ ॥
अथाऽपि यदि नो पर्वभङ्गं कर्त्ताऽसि भूपते ! । तत्पातय युगादीशप्रासादं पुरतो मम ॥ ११३ ॥
इत्याकर्णितमात्रेण नृपः सम्मूर्च्छितो भुवि । पपात गतचैतन्यो वज्रेणेव हतो हृदि ॥ ११४ ॥
तदैव सचिवादेशाद् आकुलैस्तत्परिच्छदैः । विदधे लब्धचैतन्यो नृपश्चन्दनचर्चनैः ॥ ११५ ॥
अथोन्निद्रः सूर्ययशास्ताम्रास्यः पुरतः स्थिताम् । दोषामिव पश्यति स तां जगौ च गिरातुराम् ॥ ११६ ॥
रेऽधमेऽयं तवाचारो गिरा किरति मत्पुरः । त्वत्कुलाधमतां येनोद्गारवद् भोजनं भवेत् ॥ ११७ ॥

न त्वं विद्याधरसुता किन्तु चाण्डालसम्भवा । मया मणिभ्रमेणैव चक्रे काचदलादरः ॥ ११८ ॥
त्रैलोक्यनाथो यो देवस्त्रैलोक्यजनवन्दितः । भवेत् कोऽपि कथं तस्य पर्वप्रासादभङ्गकृत् ! ॥ ११९ ॥
स्वयं स्ववचसा बद्धमनृणं कर्तुमेव माम् । धर्मलोपादतिक्रान्तमन्यद् याचस्व भामिनि ! ॥ १२० ॥
राज्याश्वगजरत्नादि सर्वं यातु मम प्रिये ! । तथापि प्राणनाशेऽपि पर्वलोपं करोमि न ॥ १२१ ॥
जगाद साऽपि तच्छ्रुत्वा सस्मितं पुनरेव तम् । नाथाऽन्यदन्यदिति च त्वद्वचो याति दूरतः ॥ १२२ ॥
इदं न चेदुरीकर्त्ता दूरीकर्त्ताऽसि चाहतम् । तत् प्रदेहि स्वसूनोर्मे शिरश्छित्वा स्वयं रयात् ॥ १२३ ॥
अथो विमृश्य भूपाल आललाप सुलोचने ! । मत्तोऽभवत् सुतस्तद् मे शिरोऽस्तु तव पाणिगम् ॥ १२४ ॥
इत्युदीर्य नृपो यावत् पाणिनाऽऽदाय निष्कृपम् । कृपाणं स्वशिरश्छेदकृते संरभते कृती ॥ १२५ ॥
तावदेव कृपाणस्यैवासौ धारां बबन्ध हा । न पुनस्तस्य सत्त्वस्य सर्वथोदयकारिणः ॥ १२६ ॥ (युग्मम्)
विलक्षो वसुधाधीशः करवालस्य बन्धनात् । नवं नवं तमादत्ते कण्ठनालविडम्बकम् ॥ १२७ ॥
यदा मनागसौ सत्त्वाद् नापक्रामति भूपतिः । ते तदाऽऽसाद्य रूपं स्वं जयेत्यूचतुरादरात् ॥ १२८ ॥
जय त्वं वृषभस्वामिकुलसागरचन्द्रमः ! । जय सत्त्ववतां धुर्य ! जय चक्रीशनन्दन ! ॥ १२९ ॥
अहो ! सत्त्वमहो ! धैर्यमहो ! मानसनिश्चयः । असिना हन्यमानोऽपि नात्यज्यः स्वं व्रतं मनाक् ॥ १३० ॥

स्वःसंसदि स्वर्गपतिः स्वर्गिणां पुरतस्तव । सत्त्वमाहात्म्यमतुलं प्रशशंस विशेषतः ॥ १३१ ॥
आवाभ्यां तु महीपाल! नदीभ्यामिव मेरुवत् । आरब्धस्त्वं क्षोभयितुं हीनाभ्यां सत्त्वनिश्चयात् ॥ १३२ ॥
रुध्यतेऽब्धिर्यदोद्वेलो मारुतश्चेद् निबध्यते । चाल्यते यदि वा मेरुस्तदा त्वत्सत्त्वनिर्णयः ॥ १३३ ॥
जगत्प्रभुकुलोत्तंसहीर ! धीर ! त्वयाऽवनी । रत्नसूरिति सन्नाम सुधाधाम बिभर्त्यसौ ॥ १३४ ॥
तयोरित्थं स्तुवत्योस्तं वास्तोष्पतिरुपागमत् । पुष्पवर्षैर्महाहर्षैरुत्कर्षात् जयशब्दवान् ॥ १३५ ॥
सन्धाभ्रष्टोर्वशी तेन सोपहासं निरीक्षिता । सद्गुणान् शक्रपुरतो जगौ पुलकितांगका ॥ १३६ ॥
शक्रोऽपि तस्मै मुकुटं कुण्डले अङ्गदे वरे । हारं दत्त्वा च स्तुत्वा च ययौ स्वर्गं सहामरैः ॥ १३७ ॥
कुनीतिध्वान्तविध्वंसी रिपुतारकवारकः । सत्यप्रतिज्ञो वसुधामपात् सूर्ययशा नृपः ॥ १३८ ॥
भरतेशवदादित्यो वसुधां जिनमण्डिताम् । व्यधाद् श्रीसङ्घयात्रां च निजं जन्म पवित्रयन् ॥ १३९ ॥
चतुर्दश्यष्टमीपर्व दृष्टशर्म स धर्मवान् । नित्यमाराधयामास श्रीयुगादिजिनांह्रिवत् ॥ १४० ॥
ज्ञानदर्शनचारित्रधारिणः श्रावकानसौ । उपलक्ष्योपलक्ष्याथ भोजयामास वेश्मनि ॥ १४१ ॥
काकिणीरत्नरेखाभिरङ्कितान् भरतेन तान् । सौवर्णेनोपवीतेनाङ्कितान् सूर्यश्चकार सः ॥ १४२ ॥

महायशःप्रभृतयः केचिद् रौप्येन चक्रिरे । पट्टसूत्रमयेनान्ये परे सूत्रमयेन तु ॥ १४३ ॥ (युग्मम्)
उदारचरितास्तस्य कुमाराः स्फारविक्रमाः । सपादलक्षमप्यासन् ते महायशआदयः ॥ १४४ ॥
इक्ष्वाकुवंशो वृषभस्वामिनो वव्रते यथा । तथा श्रीसूर्ययशसः सूर्यवंशोऽभवद् भुवि ॥ १४५ ॥
सोऽप्यन्यदा भरतवत् पश्यन् स्वं रत्नदर्पणे । संसारानित्यतां ध्यायन् केवलज्ञानमासदत् ॥ १४६ ॥
विहरन् बोधयामास सोऽपि भव्यान् मुनीश्वरः । क्रमाच्च मुक्तिनिलयं जगाम जितकर्मरुक् ॥ १४७ ॥
भरतादादित्ययशास्ततश्चासीद् महायशाः । अतिबलो बलभद्रो बलवीर्यस्ततोऽपि च ॥ १४८ ॥
कीर्त्तिवीर्यो जलवीर्यो दण्डवीर्यस्ततोऽष्टमः । इत्यष्टौ पुरुषान् यावत् वव्रते श्राद्धपूजनम् ॥ १४९ ॥
एतेऽष्टावपि रूपं स्वं पश्यन्तो रत्नदर्पणे । केवलज्ञानमासेदुः क्रमाद् निःश्रेयसं ततः ॥ १५० ॥
एभिर्भूपैश्च बुभुजे भरतार्धं समन्ततः । भगवन्मुकुटः शक्रोपनीतो मुर्ध्न्यधारि च ॥ १५१ ॥
शेषैर्महाप्रमाणत्वाद् नासौ वोढुमपार्यत । हस्तिभिर्हस्तिभारो हि वोढुं शक्येत नापरैः ॥ १५२ ॥
भरतादनु सन्ताने सर्वे भरतवंशजाः । अजितस्वामिनं यावदनुत्तरशिवालयाः ॥ १५३ ॥
सर्वेऽपि सङ्घपतयः सर्वेऽर्हच्चैत्यकारकाः । तीर्थोद्धारकराः सर्वे सर्वेऽखण्डप्रतापिनः ॥ १५४ ॥

श्रीमत्सर्वज्ञधर्माद् यो न चलत्यंशमात्रकम् । स प्राप्नोति परामृद्धिं नृपः सूर्ययशा इव ॥ १५५ ॥
इत्थं वंशस्त्रिभुवनगुरोः कोटिशाखोदितश्रीः कीर्त्त्याधारोऽमलसुचरिताऽपत्यमुक्तानिवासः ।
त्रैलोक्या यः समजनि सदालम्बयष्टिर्गरिष्ठो भूयाद् लक्ष्मीसुखविलसितानन्दहेतुः स कामम् ॥ १५६ ॥

इति सूर्ययशश्चरित्रम् ।

आदिपदात् शुभभावनाऽत्र पर्वणि भावनीया । विकथाचतुष्टयं वर्जनीयम् । कल्पसूत्रमेकाग्रचित्तेन श्रोतव्यम् । साधर्मिकवात्सल्यं कर्त्तव्यम् । तेन कल्याणपरम्परा करगामिनी भवति ।

॥ इति पर्युषणाष्टाह्निकव्याख्यानं समाप्तम् ॥

॥ इति पर्युषणाष्टाह्निकव्याख्यानम् ॥

**खंधप्पएसा परमाणुपोग्गला, ते समासतो पंचविहा पण्णत्ता, तंजहा—वण्णपरिणया गंध० रस० फास० संठाणपरिणया, एवं ते ५ जहा पण्णवणाए, सेत्तं रूविअजीवाभिगमे, सेत्तं अजीवाभिगमे (सू० ५)**

अथ कोऽसौ अजीवाभिगमः?, सूरिराह—अजीवाभिगमो द्विविधः प्रज्ञप्त, तद्यथा—रूप्यजीवाभिगमोऽरूप्यजीवाभिगमश्च, रूपमेषामस्तीति रूपिणः, रूपग्रहणं गन्धादीनामुपलक्षणं, तद्व्यतिरेकेण तस्यासम्भवात्, तथाहि—प्रतिपरमाणु रूपरसगन्धस्पर्शाः, उक्तं च —"कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः। एकरसगन्धवर्णो द्विस्पर्शः कार्यलिङ्गश्च ॥ १ ॥" एतेन यदुच्यते कैश्चित् 'भिन्ना एव रूपपरमाणवो भिन्नाश्च पृथक् पृथग् रसादिपरमाणव' इति, तदपास्तमवसेयं, प्रत्यक्षबाधितत्वात्, तथाहि—य एव नैरन्तर्येण कुचकलशोपरिनिविष्टा रूपपरमाणव उपलब्धिगोचरास्तेष्वेवाव्यवच्छेदेन सकलेष्वपि स्पर्शोऽप्युपलभ्यते, य एव च घृतादिरसपरमाणवः कर्पूरादिगन्धपरमाणवो वा तेष्वेव नैरन्तर्येण रूपं स्पर्शश्चोपलब्धिविषयः, अन्यथा सान्तरा रूपादयः प्रतीतिपथमियुः, न च सान्तराः प्रतीयन्ते, तस्मादव्यतिरेक. परस्परं रूपादीनामिति, रूपिणश्च तेऽजीवाश्च रूप्यजीवास्तेषामभिगमो रूप्यजीवाभिगमः पुद्गलरूपाजीवाभिगम इतियावत्, पुद्गलानामेव रूपादिमत्त्वात्, रूपव्यतिरिक्ता अरूपिणो—धर्मास्तिकायादयस्ते च तेऽजीवाश्चारूप्यजीवास्तेपामभिगमोऽरूप्यजीवाभिगमः॥३॥ तत्रारूपिणः प्रत्यक्षाद्यविपया. केवलमागमप्रमाणगम्यास्तत्त्वत इति प्रथमतस्तद्विपयं प्रश्नसूत्रमाह—सुगमं, सूरिराह—'अरुवी'त्यादि ॥ अरूप्यजीवाभिगमः 'दशविधः' दशप्रकारः प्रज्ञप्तः, तदेव दशविधत्वमाह—तंजहेत्यादि, 'तद्यथे'ति वक्ष्यमाणभेदकथनोपन्यासार्थः, धर्मास्तिकायः, **'एवं जहा पण्णवणाए'** इति **'एवम्'** उक्तेन प्रकारेण यथा **प्रज्ञापनायां** तथा

वक्तव्यं तावद् यावत् 'सेत्तं असंसारसमापन्नजीवाभिगमे' इति, तच्चैवम्—"धम्मत्थिकाए धम्मत्थिकायस्स देसे धम्मत्थिकायस्स पएसा अधम्मत्थिकाए अधम्मत्थिकायस्स देसे अधम्मत्थिकायस्स पएसा आगासत्थिकाए आगासत्थिकायस्स देसे आगासत्थिकायस्स पएसा अद्धासमये" इति, तत्र जीवानां पुद्गलानां च स्वभावत एव गतिपरिणामपरिणतानां तत्स्वभावधारणात्पोषणाद्धर्मः अस्तयः—प्रदेशास्तेषां कायः—सङ्घातः "गण काए य निकाए खंधे वग्गे तहेव रासी य" इति वचनात् अस्तिकायः—प्रदेशसङ्घात इत्यर्थः, धर्मश्चासावस्तिकायश्च धर्मास्तिकायः, अनेन सकलधर्मास्तिकायरूपमवयविद्रव्यमाह, अवयवी च नाम अवयवानां तथारूपः सङ्घातपरिणामविशेष एव, न पुनरवयवद्रव्येभ्यः पृथगर्थान्तरद्रव्यं, तस्यानुपलम्भात्, तन्तव एव हि आतानवितानरूपसङ्घातपरिणामविशेषमापन्ना लोके पटव्यपदेशभाज उपलभ्यन्ते, न तदतिरिक्तं पटाख्यं नाम द्रव्यम्, उक्तं चान्यैरपि—"तन्त्वादिव्यतिरेकेण, न पटाद्युपलम्भनम्। तन्त्वादयोऽविशिष्टा हि, पटादिव्यपदेशिनः ॥ १ ॥" कृतं प्रसङ्गेन, अन्यत्र धर्मसङ्ग्रहणिटीकादावेतद्वादस्य चर्चितत्वात्, तथा तस्यैव बुद्धिपरिकल्पितो द्व्यादिप्रदेशात्मको विभागो धर्मास्तिकायस्य देशः, धर्मास्तिकायस्य प्रदेशाः—प्रकृष्टा देशाः प्रदेशाः, प्रदेशा निर्विभागा भागा इति, ते चासङ्ख्येयाः, लोकाकाशप्रदेशप्रमाणत्वात्तेषाम्, अत एव बहुवचनं, धर्मास्तिकायप्रतिपक्षभूतोऽधर्मास्तिकायः, किमुक्तं भवति ?—जीवानां पुद्गलानां च स्थितिपरिणामपरिणतानां तत्परिणामोपष्टम्भकोऽमूर्त्तोऽसङ्ख्यातप्रदेशात्मकोऽधर्मास्तिकायः, अधर्मास्तिकायस्य देश इत्यादि पूर्ववत्, तथा आ—समन्तात्सर्वाण्यपि द्रव्याणि काशन्ते—दीप्यन्तेऽत्र व्यवस्थितानीत्याकाशम्, अस्तयः—प्रदेशास्तेषां कायोऽस्तिकायः, आकाशं च तदस्तिकायश्चाकाशास्तिकायः, आकाशास्तिकायस्य देश इत्यादि प्राग्वत्, नवरमस्य प्रदेशा अनन्ताः, अलोकस्यानन्तत्वात्, 'अद्धासमय' इति, अद्धेति कालस्याख्या, अद्धा चासौ समयश्चाद्धासमयः, अथवाऽद्धायाः समयो—

निर्विभागो भागोऽद्धासमयः, अयं चैक एव वर्त्तमानः परमार्थतः सन् नातीतानागताः, तेषां यथाक्रमं विनष्टानुत्पन्नत्वात्, ततः कायत्वाभावाद्देशप्रदेशकल्पनाविरहः, अथाकाशकालौ लोकेऽपि प्रतीताविति तौ श्रद्धातुं शक्येते, धर्माधर्मास्तिकायौ तु कथं प्रत्येतव्यौ ? येन तद्विषया श्रद्धा भवेत्, उच्यते, गतिस्थितिकार्यदर्शनात्, तथाहि—यद् यदन्वयव्यतिरेकानुविधायि तत्तद्धेतुकमिति व्यवहर्त्तव्यं, यथा चक्षुरिन्द्रियान्वयव्यतिरेकानुविधायि चाक्षुषं विज्ञानं, तथा च जीवानां पुद्गलानां च गतिस्थितिपरिणामपरिणतानामपि गतिस्थिती यथाक्रमं धर्माधर्मास्तिकायान्वयव्यतिरेकानुविधायिन्यौ, तस्मात्ते तद्धेतुके, न चायमसिद्धो हेतुः, तथाहि—जीवानां पुद्गलानां च गतिस्थितिपरिणामपरिणतानामपि गतिस्थिती न तत्परिणमनमात्रहेतुके, तन्मात्रहेतुकतायामलोकेऽपि तत्प्रसक्तेः, अथ न तत्परिणमनमात्रं हेतुः किन्तु विशिष्टः परिणामः, स चेत्थंभूतो यथा लोकमात्रक्षेत्रस्यान्तरेऽत्र गतिस्थितिभ्यां भवितव्यं न बहिः प्रदेशमात्रमप्यधिकं, ननु स एवेत्थम्भूतो विशिष्टपरिणाम आकालं जीवानां पुद्गलानां चोत्कर्षतोऽप्येतावत्प्रमाण एवाभूद् भवति भविष्यति वा न तु कदाचनाप्यधिकतर इत्यत्र किं नियामकं ?, यथा हि किल परमाणोर्जघन्यतः परमाणुमात्रक्षेत्रातिक्रममादिं कृत्वोत्कर्षतश्चतुर्दशरज्ज्वात्मकमपि क्षेत्रं यावद् गतिरुपजायते तथा परतोऽपि प्रदेशमात्रमप्यधिका किं न भवति ?, तस्मादवश्यमत्र किञ्चिन्नियामकमपरं वक्तव्यं, तच्च धर्माधर्मास्तिकायावेव नाकाशमात्रम्, आकाशमात्रस्यालोकेऽपि सम्भवात्, नापि लोकपरिमितमाकाशम्, इतरेतराश्रयदोषप्रसङ्गात्, तथाहि—जीवाना पुद्गलानां चान्यत्र गतिस्थित्योरभावे सिद्धे सति विवक्षितस्य परिमितस्याकाशस्य लोकत्वसिद्धिः, तत्सिद्धौ चान्यत्र जीवपुद्गलानां गतिस्थित्यभावसिद्धिरित्येकाभावेऽन्यतरस्याप्यभावः, अथ किमिदमसंबद्धमुच्यते ?, यत् लोकत्वेन सम्प्रति व्यवह्रियते क्षेत्रं, तावन्मात्रस्यैवाकाशखण्डस्य गतिस्थित्युपष्टम्भकस्वभावो न परस्य प्रदेशमात्रस्यापि ततो न कश्चिद्दोषः, ननु तावन्मात्रस्यैवाकाशस्य

